लिये महादेव से स्वयं कुछ भी प्रस्ताव नहीं किया ।

इत्थं प्रधाननायिकायाः पार्वत्याश्चरितमुपवर्ण्य सम्प्रति नायकस्य वृ
वक्तुं प्रस्तौति—

**यदैव पूर्वे जनने शरीरं, सा दक्षरोषात्सुदती ससर्ज ।**
**तदा प्रभृत्येव विमुक्तसङ्गः, पतिः पशूनामपरिग्रहोऽभूत् ॥५३॥**

गिरिजे ! मरी पहले जनम में, शम्भु नाता तोड़कर ।
पत्नी रहित तब से हुए हर, वासना सब छोड़कर ॥

**अन्वयः**—सुदती सा पूर्वे जनने ( पूर्वे ज्वलने वा ) यदा दक्षरोषात् ससर्ज, तदाप्रभृति एव पशूनां पतिः विमुक्तसङ्गः सन् अपरिग्रहः अभूत् ।

**व्याख्या**—सुदती = शोभनदन्तयुक्ता, सा=पार्वती, पूर्वे=पूर्वस्मिन्, जन्मनि, ( पूर्वे = दाक्षायणीत्वे, ज्वलने = योगाग्नौ ) यदा = यस्मिन् काले, रोषात् = दक्षकोपात्, शरीरं = देहं, ससर्ज = तत्याज, तदाप्रभृति एव= एव, पशूनां पतिः = शम्भुः, विमुक्तसङ्गः=परित्यक्तविषयासङ्गः सन्, अपरि अपत्नीकः, अभूत् = अभवत् ।

**व्युत्पत्तिः**— सुदती=शोभनाः दन्ताः यस्याः सा सुदती, "वयसि दन्तस्य दतृ" (५-४-१४१) इति दत्रादेशः । स्त्रीत्वविवक्षायाम् "उगितश्च" (४-१ इति ङीप्प्रत्ययः । पूर्वे="पूर्वादिभ्यो नवभ्यो वा" इति स्मिन्नादेशविकल्प दक्षरोषात्=दक्षे रोषः दक्षरोषः, तस्मात् दक्षरोषात् । "कोपक्रोधाऽमर्षरोष रुट्क्रुधौ स्त्रियौ" इत्यमरः । ससर्ज="सृज विसर्गे" इति धातोर्लिट् । पतिः="शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः" इत्यमरः । विमुक्त विशेषेण मुक्तः विमुक्तः, विमुक्तः सङ्गः येन सः विमुक्तसङ्गः । अपरिग्रहः= मानः परिग्रहः यस्य सः अपरिग्रहः, "पत्नीपरिजनादानमूलशापाः परि इत्यमरः ।

अत्र पूर्वप्रवृत्तत्वेन सूचितस्य शृङ्गाररसस्य विरोधी तपश्चर्यानुभावकः रसस्तृतीयसर्गान्तं यावदनुवर्तते । तयोश्च विरोधस्तदुभयाऽविरुद्धेन देवीदे सूचितेन मध्येपतता करुणरसेन प्रशमितः । तदुक्तं ध्वनिकारेण—

"रसान्तरान्तरितयोरेकवाक्यस्थयोरपि ।
निवर्तते हि रसयोः समावेशे विरोधिता ॥" इति ।

**भावार्थः**—शोभनदशना पार्वती पूर्वस्मिन् जन्मनि दक्षसुतात्वाव

पितरि दक्षविषये कोपात् यस्मिन् काले स्वशरीरं योगाग्नौ तत्याज, तदानीमेवा-
य शङ्करस्त्यक्तविषयासङ्गः सन् अन्यां स्त्रियं न जग्राहेति भावः ।

भाषा—पार्वती ही प्रथम जन्म में दक्षप्रजापति की कन्या थी, और शङ्कर से
हीं थी, उसने पिता के अपमान से क्रुद्ध होकर अपने शरीर का योगाग्नि में
ाग किया था, तभी से शङ्कर ने भी विषयवासना का परित्यागकर दूसरे किसी
ी से विवाह नहीं किया था ।

नेस्सङ्गस्य भगवतो हरस्य प्रवृत्तिं दर्शयति—

**स कृत्तिवासास्तपसे यतात्मा, गङ्गाप्रवाहोक्षितदेवदारु ।**
**प्रस्थं हिमाद्रेर्मृगनाभिगन्धि, किञ्चित्क्वणत्किन्नरमध्युवास ॥ ५४ ॥**

मृग चर्म लेकर चित्त वश में भजन हित बैठे वहाँ ।
थे जाह्नवी सिंचित सरल, मृगमदसुरभिमय थल जहाँ ॥

अन्वयः—कृत्तिवासाः यतात्मा सः तपसे गङ्गाप्रवाहोक्षितदेवदारु मृगनाभि-
गन्धि क्वणत्किन्नरं किञ्चित् हिमाद्रेः प्रस्थम् अध्युवास ॥

व्याख्या—कृत्तिवासाः = चर्माऽम्बरः, यतात्मा = नियतचित्तः सः = पशु-
तिः शिव इत्यर्थः, तपसे = तपोऽर्थम्, गङ्गाप्रवाहोक्षितदेवदारु = भागीरथी-
क्षितिसिक्तदेवदारु, मृगनाभिगन्धि=कस्तूरीगन्धवत्, क्वणत्किन्नरं = गायत्कि-
रुषं, किञ्चित्=किमपि, हिमाद्रेः=हिमालयस्य, प्रस्थं=सानुम्, अध्युवास=अधि-
तवान्, कुत्रचित्प्रस्थे उवासेत्यर्थः ॥

व्युत्पत्तिः—कृत्तिवासाः=कृत्तिः वासः यस्य सः कृत्तिवासाः, "सान्तमहतः
योगस्य ६।४।१०" इति दीर्घः । "अजिनं चर्म कृत्तिः स्त्री" इति । "वस्त्रमा-
च्छादनं वासश्चेलं वसनमंशुकम्" इति चाऽमरः । वस्यते अनेन वासः, "वसे
च्छादने" इति धातोः "वसेर्णित् ४।६५७" इत्युणादिसूत्रेण असुन् प्रत्ययः ।
तात्मा=यतः आत्मा यस्य सः यतात्मा । गङ्गाप्रवाहोक्षितदेवदारु=गङ्गायाः प्रवाहः
प्रवाहस्तु प्रवृत्तिः स्यात्" इत्यमरः । "उक्ष सेचने" इति धातोः निष्ठायां क्तप्रत्य-
ये उक्षितपदसिद्धिः । गङ्गाप्रवाहेण उक्षिताः गङ्गाप्रवाहोक्षिताः । गङ्गाप्रवाहोक्षिताः
देवदारवः यस्मिन् तत् गङ्गाप्रवाहोक्षितदेवदारु, तत् । अनेन प्रस्थस्य पावनत्वं,
जलबाहुल्यं, छायासौख्यं चोक्तम्, रमणीयत्वमप्याह—मृगनाभिगन्धि=मृगनाभेः
गन्धः मृगनाभिगन्धः, "मृगनाभिर्मृगमदः कस्तूरी" इत्यमरः । मृगनाभिगन्धः
अस्य अस्तीति मृगनाभिगन्धि, तत् । "अत इनिठनौ" इति इनिप्रत्ययः ।

क्वणत्किन्नरं=कुत्सिताः नराः किन्नराः, "किं क्षेपे २।१।६४" इति स
कुत्सा च कस्यचित् नरमुखाश्वकायत्वात्, कस्यचित् अश्वमुखनरशरीरत्वा
भानुदीक्षितः । "स्यात्किन्नरः किंपुरुषस्तुरङ्गवदनो मयुः" इत्यमरः । क्व
क्वणन्तः, "क्वण शब्दे" इति धातोः शतृप्रत्ययः । क्वणन्तः किन्नराः यस्मि
क्वणत्किन्नरं तत् । हिमाद्रेः=हिमानाम् अद्रिः हिमाद्रिः, तस्य हिमाद्रेः । "
स्तुहिनं हिमम्" इत्यमरः । प्रस्थं="प्रस्थोऽस्त्री सानुमानयोः" इ
"अध्युवास" इति क्रियापदेन सह प्रस्थपदस्य अन्वयात् "उपान्वध्याङ्वसः"
आधारस्य प्रस्थस्य कर्मत्वम्, ततः "कर्मणि द्वितीया" इति द्वितीया ।

**भावार्थः**—गजचर्मधारी नियतचित्तः शङ्करस्तपश्चरितुं भागीरथी
सिक्तदेवदारुवृक्षयुक्तं कस्तूरीसुगन्धसहितं गायत्किन्नरमिथुनसङ्कुलं हिमा
किमपि शिखरमध्यास्तेति भावः ।

**भाषा**—गजचर्म को धारण कर जितेन्द्रिय शङ्करभगवान्, तपश्चर्या क
लिये, जहां भागीरथी का झरना बहा करता था, देवदारु के बहुत से
कस्तूरिमृगों का चारो तरफ सुगन्ध था, किन्नर मिथुन जहां सर्वदा गाया क
ऐसे रमणीय हिमालय के किसी शिखर पर रहा करते थे ।

अथ तपश्चरणोद्युक्ते परमेश्वरे भूतगणानां तद्देशकालोचितमुपभोगं वर्णयति—

**गणा नमेरुप्रसवावतंसा भूर्जत्वचः स्पर्शवतीर्दधानाः ।**
**मनःशिलाविच्छुरिता निषेदुः शैलेयनद्धेषु शिलातलेषु ॥ ५५ ॥**

शिर में नमेरु कुसुम पहन, तन भोज वल्कल धार कर ।
बैठे शिलाजतु-औषधों से व्याप्त शुचि चट्टान पर ॥

**अन्वयः**—गणाः नमेरुप्रसवाऽवतंसाः स्पर्शवतीः भूर्जत्वचः दधानाः
शिलाविच्छुरिताः शैलेयनद्धेषु शिलातलेषु निषेदुः ।

**व्याख्या**—गणाः=प्रमथगणाः, नमेरुप्रसवाऽवतंसाः=सुरपुंनागकु
खराः, स्पर्शवतीः=सुखस्पर्शाः मृद्वीः इत्यर्थः, भूर्जत्वचः=भूर्जवल्कलानि, द
धारयन्तः वसानाः इत्यर्थः, मनःशिलाविच्छुरिताः=मनोगुप्ताऽनुलिप्ताः
शैलेयनद्धेषु=शिलाजतुव्याप्तेषु, शिलातलेषु=पाषाणतलेषु, निषेदुः=उपवि

**व्युत्पत्तिः**—गणाः="गणः प्रमथसङ्ख्यौघाः" इति वैजयन्ती । नमेरु
ऽवतंसाः=नमेरूणां प्रसवाः नमेरुप्रसवाः, "नमेरुः सुरपुन्नागः" इति
नमेरुप्रसवाः अवतंसाः येषां ते नमेरुप्रसवावतंसाः । स्पर्शवतीः=प्रशस्तः

स्ति आसां ताः स्पर्शवत्यः, ताः, स्पर्शवतीः, प्रशंसायां मतुप्प्रत्ययः । "उगितश्च" ति ङीप्प्रत्ययः । भूर्जत्वचः=भूर्जानां त्वचः भूर्जत्वचः ताः । मनःशिला-च्छुरिताः=मनःशिलाभिः=धातुविशेषैः, विच्छुरिता मनःशिलाविच्छुरिताः, मनःशिलामनोगुप्ता मनोह्वा नाडजिह्विका । नैपाली कुनटी गोला" इत्यमरः । लेयनद्धेषु=शिलायां भवं शैलेयं, शिलाशब्दात् "नद्यादिभ्यो ढक् ४।२।९७" ति ढक्प्रत्ययः, तस्य "आयनेयी०" इत्यादिना एयः, "किति च" इति आदि-द्धिश्च । "शिलाजतु च शैलेयम्" इति यादवः । शैलेयेन नद्धानि शैलेयनद्धानि, षु शैलेयनद्धेषु । शिलातलेषु=शिलानां तलानि शिलातलानि तेषु शिलातलेषु पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्" इति "अधःस्वरूपयोरस्त्री तलम्' ति चामरः । निषेदुः=न्युपसर्गपूर्वकात् "षद्लृ विशरणगत्यवसादनेषु" इति तोर्लिटि प्रथमपुरुषस्य बहुवचने रूपमिदम् ॥

**भावार्थः**—प्रमथादिशिवगणाः, सुरपुन्नागकुसुमशेखराः, सुखस्पर्शाः भूर्ज-त्वचः परिदधानाः, मनःशिलाधात्वनुलिप्ताः सन्तः, शिलाजतुव्याप्तेषु शिला-देशेषु समुपविविशुरित्यर्थः । भूतगणास्तद्देशसुलभैरुपभोगसाधनैर्भगवत्सन्निधा-त्र रेमिर इति भावः ।

**भाषा**—प्रमथादिक गण भी उस प्रदेश मे सर्वदा सुलभ सुरपुन्नाग के सुमों को धारण कर, अत्यन्त मुलायम भोज पत्र को पहिन कर, शिलाजीत से प्त पत्थरों की चट्टानो पर बैठकर, शङ्कर भगवान की सेवा में उपस्थित रहकर नन्द मनाते थे ।

अथ भगवद्वाहनभूतं नन्दिनमुपवर्णयति—

**तुषारसङ्घातशिलाः खुराग्रैः, समुल्लिखन्दर्पकलः ककुद्मान् ।**
**दृष्टः कथञ्चिद् गवयैर्विविग्नैरसोढसिंहध्वनिरुन्ननाद ॥ ५६ ॥**

हिम की शिला तोड़ता, खुर न्यास दे अभिमान से ।
सहकर न हरि-रव उच्च स्वर रँभता वृषभ जी जान से ॥

**अन्वयः**—तुषारसङ्घातशिलाः खुराग्रैः समुल्लिखन् दर्पकलः विविग्नैः गवयैःकथञ्चित् दृष्टः ककुद्मान् असोढसिंहध्वनिः सन् उन्ननाद ॥

**व्याख्या**—तुषारसङ्घातशिलाः=हिमघनप्रस्तरान्, खुराग्रैः=शफाग्रैः, ल्लिखन्=विदारयन्, दर्पकलः=मानमधुरध्वनिः, विविग्नैः=भीतैः, गवयैः=नूकैः, गोसदृशमृगविशेषैरित्यर्थः, कथञ्चित्=कृच्छ्रेण, दृष्टः=अवलोकितः,

ककुद्मान् = ककुदयुक्तः, वृषभ इत्यर्थः, असोढसिंहध्वनिः=अक्षान्तमृगेन्द्र सन् , उन्ननाद=उच्चैर्ननाद, जगर्ज इत्यर्थः ।

व्युत्पत्तिः—तुषारसङ्घातशिलाः=तुषाराणां सङ्घाताः तुषारस ते एव शिलाः ताः, तुषारसङ्घातशिलाः, खुराग्रैः=खुराणाम् अग्राणि खुरा तैः खुराग्रैः "शफं क्लीवे खुरः पुमान्" इति कोषः । समुल्लिखन् = समुल्लि समुल्लिखन् , शतृप्रत्ययः, "उगिदचां सर्वनामस्थानेऽधातोः" इति नुम् कलः = दर्पेण कलः दर्पकलः "दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः कोषः । गवयैः = "गवयस्तु गवानूकः" इति त्रिकाण्डशेषकोषः । ककुद्मान् दं=वृषस्कन्धनिकटस्थमांसपिण्डः, अस्ति यस्य सः ककुद्मान् । "प्राधान्ये रा च वृषाऽङ्गे ककुदोऽस्त्रियाम्" इत्यमरः । असोढसिंहध्वनिः=न सोढः "षह मर्षणे" इति धातोः क्तप्रत्ययेन सोढपदसिद्धिः, "सहिवहोरोदवर्णस्य ओत्वम् । हिनस्तीति सिंहः, "हिसि हिंसायाम् ( रु० प० से० )" इति पचाद्यच् । हिंस इति वक्तव्यत्वे " पृषोदरादीनि यथोपदिष्टम् ६।३।१०९", सूत्रेण वर्णविपर्ययः । सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः" इत सिंहानां ध्वनिः सिंहध्वनिः, "शब्दे निनादनिनदध्वनिध्वानरवस्वनाः" इत्य असोढः सिंहध्वनिः येन सः असोढसिंहध्वनिः । उन्ननाद=उदुपसर्गपूर्वकात् अव्यक्ते शब्दे" इति धातोर्लिट् । अत्र स्वभावोक्तिरलङ्कारः, तल्लक्षणं च सा हित्यदर्पणे—"स्वभावोक्तिदुरूहार्थस्वक्रियारूपवर्णनम्" इति ।

भावार्थः—नित्यहतत्वात् तद्देशसम्भविनं धीरधीरं सकलसत्वभीषणम् ध्वानमसहमानस्तत एव खुरविलिखिततुहिनशिलः कैलासशिखरसदृशतना प्रलयमेघगर्जिततुल्यध्वानतया च भयचकितैः सजातीयशङ्कया गवयैर्विलोकित हरस्य वाहनभूतो वृषो जगर्जेति भावः ।

भाषा—सिंहों के नाद को सहन न कर, अपाने खुरों से बरफ की को तोड़ता हुआ, भयभीत गवयों से देखा जाने वाला, कैलास के शि समान अति पुष्ट शरीरवाला, शङ्कर का वाहन भूत, अतिगर्विष्ठ, नन्दी बैल भी उस प्रदेश में प्रलय कालिक मेघ के समान गरजता था ।

इत्थं शङ्करपार्षदानां प्रवृत्तिं प्रतिपाद्य सम्प्रति भगवतः शङ्करस्य तपो व

**तत्राऽग्निमाधाय समित्समिद्धं, स्वमेव मूर्त्यन्तरमष्टमूर्तिः ।**
**स्वयं विधाता तपसः फलानां, केनाऽपि कामेन तपश्चचार ।**

ले दूसरी निज मूर्ति पावक, अष्टमूर्ति हुए विकल ।
तप के लिये तप-फलद शङ्कर, हो गये तप में अटल ॥

**अन्वयः**—तपसः फलानां स्वयं विधाता अष्टमूर्तिः तत्र स्वम् एव मूर्त्यन्तरं त्समिद्धम् अग्निम् आधाय केन अपि कामेन तपः चचार ।

**व्याख्या**—तपसः=तपस्यायाः, फलानाम्=स्वर्गापवर्गादीनां, स्वयम्=त्मना, विधाता=जनयिता, दाता इत्यर्थः, अष्टमूर्तिः=अष्टकायः, परमेश्वर र्थः, तत्र=तस्मिन् प्रस्थे, स्वम् एव=आत्मीयम् एव, मूर्त्यन्तरं=मूर्ति-, समित्समिद्धं=काष्ठदीपितम्, अग्निं=वह्निम्, आधाय=प्रतिष्ठाप्य, केनापि मेन=कयाप्यलौकिकफलकामनया, तपः=तपस्यां, चचार=चक्रे ।

**व्युत्पत्तिः**—विधाता=विदधातीति विधाता । अष्टमूर्तिः=अष्टौ मूर्तयः य सः अष्टमूर्तिः । "मूर्तिः काठिन्यकाययोः" इत्यमरः । शङ्करस्य अष्टमूर्त-—"भूताऽर्कचन्द्रयज्वानो मूर्तयोऽष्टौ प्रकीर्तिताः" इति । तत्र=तस्मिन् इति , "सप्तम्यास्त्रल्" इति त्रल् प्रत्ययः । मूर्त्यन्तरम्=अन्या मूर्तिः मूर्त्यन्तरः, मूर्त्यन्तरम्, "मयूरव्यंसकादयश्च" इति समासः । समित्समिद्धं=सम्यक् समिद्धः, "कुगतिप्रादयः" इति समासः । "ञिइन्धी दीप्तौ" इति धातोः र्गपूर्वकात्प्रत्ययेन इद्धपदसिद्धिः । समिद्भिः समिद्धः समित्समिद्धः, तं समित्समिद्धम्, काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम्" इत्यमरः । अग्निम्="अग्नि-वानरो वह्निर्वीतिहोत्रो धनञ्जयः" इत्यमरः । आधाय=आङुपसर्गपूर्वकात् "डुञ् धारणपोषणयोः" इति धातोः क्त्वा, तस्य ल्यबादेशः । विलेखनप्रोक्षणा-ना सम्पाद्येत्यर्थः । "नात्र गार्हपत्यादीनामग्नीनां श्रौतेनाधानविधिना सम्पादनं वद्धितम्, तत्र सपत्नीकस्यैवाधिकारात्" । "प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रव-" इति न्यायात्, कामेन इत्युक्तम् । "शङ्करस्य प्राप्तसमस्तकामत्वात् केनाऽपि युक्तम्" वस्तुतस्तु भगवतस्तपश्चरणं "सर्वैरप्येवं कर्तव्यमि"ति लोकानामुपदे-नुग्रहायैवेति बोध्यम् ।

था चोक्तं भागवते—

"ईजे च भगवान् रामो यत्रास्पृष्टोऽपि कर्मणा ।
लोकानां ग्राहयञ्छीलं यथान्योऽघापनुत्तये ॥" इति ।

**भावार्थः**—तपःफलत्वेन प्रसिद्धानां स्वर्गादीनां स्वयमेव प्रदाताऽष्टमूर्तिः वः स्वकीयमेव मूर्तिभेदं समिद्भिर्दीपितं जातवेदसं सम्पाद्य हिमवच्छिखरे केना-

प्यनिर्वचनीयेन भक्तोपदेशानुग्रहकामेनानुष्ठानं चकारेति भावः ।

**भाषा**—उसी हिमालय के रम्य शिखर पर, प्रसिद्ध स्वर्गादि फलों के दूसरे को देने वाले, महादेव की समिधाओं से प्रदीप्त स्वकीय मूर्त्यन्तर का आधान करके, भक्तों को सदाचार के उपदेश की अनिर्वचनीय कामना से, अनुष्ठान करते थे ।

इत्थमुपवर्णितवृत्तयोर्नायिकानायकयोः परस्परसङ्घटनार्थं प्रसङ्गोपात्तं वृत्तं प्रस्तौति—

**अनर्घ्यमर्घ्येण तमद्रिनाथः, स्वर्गौकसामर्चितमर्चयित्वा ।**
**आराधनायाऽस्य सखीसमेतां, समादिदेश प्रयतां तनूजाम् ॥**

गिरिराज ने सादर प्रथम, सुर पूज्य शिव पूजन किया ।
विजया जया के साथ फिर, सेवा गिरिजा को दिया ॥

**अन्वयः**—अद्रिनाथः अनर्घ्यं स्वर्गौकसाम् अर्चितं तम् अर्घ्येण अर्चयित्वा अस्य आराधनाय सखीसमेतां प्रयतां तनूजां समादिदेश ।

**व्याख्या**—अद्रिनाथः = पर्वतेश्वरः, हिमालय इत्यर्थः, अनर्घ्यम् = अ स्वर्गौकसां = त्रिदिवस्थानानां, देवानामित्यर्थः, अर्चितं = पूज्यमानं, तं = शि अर्घ्येण = उदकेन; पूजार्थेनेत्यर्थः, अर्चयित्वा = पूजयित्वा, अस्य = श आराधनाय = सेवनाय, सखीसमेतां = वयस्यायुक्तां, जया विजयोपेतामित्यर्थः तां = पवित्रां, नियमादिना इत्यर्थः, तनूजां = सुतां, समादिदेश = आज्ञापय

**व्युत्पत्तिः**—अद्रिनाथः = अद्रीणां नाथः अद्रिनाथः । अनर्घ्यम् = मूल्यम् अर्हतीति अर्घ्यः, "मूल्ये पूजाविधावर्घः" इत्यमरः; "दण्डादिभ्यः यत्प्रत्यः । न अर्घ्यः अनर्घ्यः, तम् अनर्घ्यम् । स्वर्गौकसां = स्वर्गः ओ ते स्वर्गौकसः, तेषां स्वर्गौकसाम् । अर्चितम् = "अर्च पूजायाम्" इति "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्तमाने क्तप्रत्ययः । स्वर्गौकसामित्यत्र च वर्तमाने इति षष्ठी । अर्घ्येण = अर्घः = पूजा, तदर्थं जलमर्घ्यम् , तेन "पादार्घाभ्यां च" इति यत्प्रत्ययः । "षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वा इत्यमरः । सखीसमेतां = सखीभ्यां समेता सखीसमेता, तां सखीस "आलिः सखी वयस्या च" इत्यमरः । प्रयतां = "पवित्रः प्रयतः पूतः" इ तनूजां = तन्वाः जाता तनूजा, तां तनूजां, "स्त्रियां मूर्तिस्तनुस्तनूः" इ समादिदेश = समाङुपसर्गद्वयपूर्वकात् "दिश अतिसर्जने" इति धातोः

ट्'' इति लिट् । अत्रानुप्रासो नाम शब्दालङ्कारः ।

भावार्थः—शिवानुग्रहमात्रलब्धब्रह्मादिलोका देवा अपि मोक्षपदोपलब्धये
सां मनसामप्यगोचरं यं सदाशिवं नानाद्रव्यनिर्मितासु प्रतिमासु पूजयन्ति, तं
केनापि पुण्यपरिपाकेन स्वप्रस्थोपस्थितमुपलभ्य हिमालयोऽर्घ्यादिभिः पूजयि-
तद्विच्छेदाय श्रद्धादिगुणयुक्तां सखीसमन्वितां स्वकन्यां पार्वतीं तत्र नियुक्त-
नीति भावः ।

भाषा—हिमालय ने देवताओं को भी पूज्य और स्वकीय शिखरपर रहने
ते महादेवजी की यथा योग्य पूजा कर के, उनकी सेवा शुश्रूषा के लिये, जया
र विजया नामक दो सखियों के साथ श्रद्धायुक्त पार्वती को नियुक्त किया ।

स्यां शङ्करस्य प्रतिपत्तिमाह—

**प्रत्यर्थिभूतामपि तां समाधेः, शुश्रूषमाणां गिरिशोऽनुमेने ।**
**विकारहेतौ सति विक्रियन्ते, येषां न चेतांसि त एव धीराः ॥५९॥**

तप के लिये थी विघ्न तो भी पार्वती को रख लिया ।
वे धीर हैं कारण रहे पर चल न हो जिनकी क्रिया ॥

अन्वयः—गिरिशः समाधेः प्रत्यर्थिभूताम् अपि शुश्रूषमाणां ताम् अनुमेने,
कारहेतौ सति येषां चेतांसि न विक्रियन्ते, ते एव धीराः ॥

व्याख्या—गिरिशः=शिवः, समाधेः=चित्तैकाग्र्यस्य, प्रत्यर्थिभूतामपि=
तिपक्षभूतामपि, शुश्रूषमाणां=सेवमानां, तां=पार्वतीम् अनुमेने=अङ्गीच-
र; "अर्थान्तरन्यासेनोक्तमर्थं द्रढयति" विकारहेतौ=प्रकृत्यन्यथात्वकारणे,
ते=विद्यमाने, येषां=जनानाम्, चेतांसि=चित्तानि, न विक्रियन्ते=न विकृ-
नीयन्ते, ते एव=उक्तपुरुषा एव, धीराः=धैर्ययुक्ताः, नान्य इत्यर्थः ।

व्युत्पत्तिः—प्रत्यर्थिभूताम्=प्रतिकूलम् अर्थयते तच्छीला प्रत्यर्थिनी, प्रत्यु-
र्गपूर्वकात् "अर्थ याञ्चायाम् (चु० उ० से०) इति धातोः "सुप्यजातौ णिनि-
च्छील्ये ३।२।७८" इति सूत्रेण णिनिप्रत्ययः, ततः स्त्रीत्वविवक्षायाम् "ऋ-
भ्यो ङीप्" इति ङीप् प्रत्ययः । "अभिघातिपराऽरातिप्रत्यर्थिपरिपन्थिनः"
यमरः । प्रत्यर्थिनी भूता प्रत्यर्थिभूता, तां प्रत्यर्थिभूतां, "सुप्सुपा" इति
ासः । शुश्रूषमाणां=श्रोतुम् इच्छन्ती शुश्रूषमाणा, तां शुश्रूषमाणां, शुश्रूषा-
दश्च श्रवणेच्छायाः कार्यं लक्षयन् परिचर्यायां रूढः । "श्रु श्रवणे" इति धातोः
ातोः कर्मणः समानकर्तृकादिच्छायां वा ३।१।७" इति इच्छायां सन् प्रत्ययः ।

"ज्ञाश्रुस्मृदृशां सनः" ( १-३=५७ ) इत्यात्मनेपदं, शानच्प्रत्ययः । अ
अनूपसर्गपूर्वकात् "मनु अवबोधने" इति धातोर्लिट् । "नप्रतिषिद्धवान् इ
भिप्रायः" । विकारहेतौ=विकारस्य हेतुः विकारहेतुः तस्मिन् विकारहेतौ, "
कारणं बीजम्" इत्यमरः विक्रियन्ते=कर्मणि लट् । धीराः = "धीरो म
प्राज्ञः सङ्ख्यावान्पण्डितः कविः" इत्यमरः अनेन वाक्येन वक्ष्यमाणकाम
दिवृत्तान्तावगम्यस्य देवगतस्यारूपहार्यत्वस्य बीजन्यासः कृतः ।

अत्राऽर्थान्तरन्यासाऽलङ्कारः ।

**भावार्थः**—सदाशिवो ध्यानस्य प्रतिपक्षभूतामपि सेवमानां तां पार्वत
चकार । यतश्चित्तविकृतिप्रधानभूते स्त्रीसन्निधानादिकारणे सत्यपि येषां
विकृतिं न नीयन्ते, ते एव महात्मानो धीरा उच्यन्ते, नान्य, इति भावः ।

**भाषा**—महादेवजी ने समाधिको भङ्ग करने वाली अत्यन्त सुन्दरी
की सेवा शुश्रूषा को स्वीकार कर लिया । क्योंकि चित्तके विकार को उत्प
में प्रधानभूत युवती स्त्री का सान्निध्य होने पर भी, जिनके मनमें विकार
नही होता, वे ही महात्मा कहाते हैं ।

अथोत्तरसर्गे कथान्तरप्रस्तावाय प्रस्तुतशुश्रूषाप्रकारेणैव पार्वत्याश्चिग
दर्शयितुं शुश्रूषा प्रकारमाह—

**अवचितबलिपुष्पा वेदिसंमार्गदक्षा**
**नियमविधिजलानां बर्हिषां चोपनेत्री ।**
**गिरिशमुपचचार प्रत्यहं सा सुकेशी**
**नियमितपरिखेदा तच्छिरश्चन्द्रपादैः ॥ ६० ॥**

शुचि वेदिका पर जल कुसुम कुश नित उमा रखती रहीं ।
शिर चन्द्र किरणों से सदा वह दूर श्रम करती रहीं ॥

**अन्वयः**—सुकेशी सा अवचितबलिपुष्पा वेदिसंमार्गदक्षा नियमविधि
बर्हिषां च उपनेत्री सती तच्छिरश्चन्द्रपादैः नियमितपरिखेदा सती
गिरिशम् उपचचार ॥

**व्याख्या**—सुकेशी=सुन्दरकुन्तला, सा = पार्वती, अवचितबलिपु
लूनपूजाकुसुमा, वेदिसंमार्गदक्षा=नियमवेदिकासम्मार्जनचतुरा, नियम
लानां=नित्यकर्माऽनुष्ठानतोयानां, बर्हिषां च=कुशानां च, उपनेत्री=
सती, तच्छिरश्चन्द्रपादैः = गिरिशमूर्धेन्दुरश्मिभिः, नियमितपरिखेदा=
र्तितपरिश्रमा सती, प्रत्यहं=प्रतिदिनं, गिरिशम्=शिवम् , उपचचार=शुश्रूष

व्युत्पत्तिः—सुकेशी=शोभनाः केशाः यस्याः सा सुकेशी "स्वाङ्गाच्चोपसर्ज-
दसंयोगोपधात्" इति ङीष् प्रत्ययः । "चिकुरः कुन्तलो बालः कचः केशः
रोरुहः" इत्यमरः । अवचितबलिपुष्पा=बलेः पुष्पाणि बलिपुष्पाणि, अवचि-
नि बलिपुष्पाणि यया सा अवचितबलिपुष्पा, वेदिसंमार्गदक्षा=वेदेः संमार्गः
देसंमार्गः' "वेदिः परिष्कृता भूमिः" इत्यमरः । वेदिसंमार्गे दक्षा वेदिसंमार्ग-
क्षा, नियमविधिजलानां=नियमस्य विधिः नियमविधिः, "नियमस्तु स यत् कर्म
त्यमागन्तुसाधनम्" इत्यमरः । तस्य जलानि नियमविधिजलानि, तेषां नियम-
धिजलानाम् । "आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्" इत्यमरः ।
र्हिषां="बर्हिर्ना कुशशुष्मणोः" इति त्रिकाण्डशेषकोषः । उपनेत्री उपनयतीति
नेत्री, उपोपसर्गपूर्वकात् "णीञ् प्रापणे" इति धातोः "ण्वुल्तृचौ" इति तृच्प्र-
यः, स्त्रीत्वविवक्षायाम् -'ऋन्नेभ्यो ङीप्' इति ङीप्प्रत्ययः । तच्छिरश्चन्द्रपादैः–
य शिरः तच्छिरः, " उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः ।
द्रस्य पादा चन्द्रपादाः, "पादारश्म्यङ्घ्रितुर्यांशाः" इत्यमरः । तच्छिरसि चन्द्र-
दाः तच्छिरश्चन्द्रपादाः, तैः तच्छिरश्चन्द्रपादैः । नियमितपरिखेदा=नियमितः
खेदः यस्याः सा नियमितपरिखेदा । प्रत्यहम्=अहनि अहनि इति प्रत्यहम् ।
व्ययं विभक्तिसमीपसमृद्धि०" इत्यादिना नियतार्थेऽव्ययीभावः । "नपुंसकादन्य-
ाम्" इति समासान्तः अच्प्रत्यः ।

अत्र तच्छिरश्शब्देन पीडाहारकाणां नित्यसुलभत्वं कूपखनकवृत्तिश्च ध्वन्यते ।
कूपखनकस्य खननोद्भवं खेदं तदुद्भूतमेव जलमपनयति, तथाऽस्या अपि
वाजनितश्रमस्तच्छिरश्चन्द्रपादैरेवापनुद्यत इति तदाशयः ।

**भावार्थः**—शोभनमूर्धजा सा पार्वती पूजनार्थं पुष्पाहरणेन, वेदिकायाः
ङ्मार्जनेन, नित्यकर्मानुष्ठानाय जलानयनेन, कुशानामादानेन च शङ्करभाल-
न्द्रकिरणैर्निवर्तितश्रमा सत्यहरहः शिवं शुश्रूषाञ्चक्रे इति भावः ।

**भाषा**—सुन्दर केशवाली सुकुमारी पार्वती पूजन के लिये फुलोंको तोड़कर,
का को अच्छी तरह साफ रख कर, नित्यकर्म के लिये जल तथा कुशों को
र, सर्वदा शङ्कर के मस्तकपर स्थित चन्द्रमाके अमृतमय किरणों से परिश्रम की
वट को न पाकर, प्रतिदिन शङ्कर भगवान की श्रद्धा से सेवा शुश्रुषाकरती थी।

इति श्रीभारद्वाजगङ्गाधरशास्त्रिविरचितया पुंसवनीसमाख्यया व्याख्यया समेतः
श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये पार्वतीप्रादुर्भावो नाम
प्रथमः सर्गः समाप्तः ।

---

## अथ द्वितीयः सर्गः ।

अथोपवर्णितप्रस्तुतकथानुगुणं कथान्तरमारभते—

**तस्मिन्विप्रकृताः काले, तारकेण दिवौकसः ।**
**तुरासाहं पुरोधाय, धाम स्वायम्भुवं ययुः ॥ १ ॥**

**उस समय तारक ने भगाया देव गण को शक्ति से ।**
**कर इन्द्र को आगे गये वे विधि निकट अतिभक्ति से ॥**

**अन्वयः**—तस्मिन् काले तारकेण विप्रकृताः दिवौकसः तुरासाहं
स्वायम्भुवं धाम ययुः ॥

**व्याख्या**—तस्मिन् काले=पार्वतीशुश्रूषासमये, तारकेण = तारकान् इव, वज्रनखपुत्रेणेत्यर्थः, विप्रकृताः = उपप्लुताः, दिवौकसः = देवाः, तुरा इन्द्रम्, पुरोधाय=पुरस्कृत्य, अग्रे कृत्वेत्यर्थः, स्वायम्भुवं = ब्राह्मं, ब्रह्मण धाम = स्थानं, ययुः=जग्मुः ॥

**व्युत्पत्तिः**—काले="कालो दिष्टोऽप्यनेहाऽपि समयः" इत्यमरः। कसः = द्यौः ओकः येषां ते दिवौकसः, "पृषोदरादीनि यथोपदिष्टम्" इ त्वम् । द्योशब्दस्थाने दिवादेशः इति तत्सिद्धिः, यद्वा दिवम् ओकः येषां कसः । "दिवं स्वर्गेऽन्तरिक्षे च" इति विश्वः । तुरासाहं=तुरं = त्वरितं अभिभवति इति तुराषाट्, तं तुरासाहं । णिजंन्तात् "षह मर्षणे" इ क्विप् प्रत्ययः "नहिवृति—(६-३-५६)" इत्यादिना पूर्वपदस्य दीर्घः। धाऽभिधानव्याकरणकारस्तु तुराशब्दः टाबन्त इत्याचष्टे । आजादिषु साड्रूपत्वाभावात् "सहेः साडः सः ८।३।५६" इति षत्वं न भवति । " नो दुश्च्यवनस्तुराषाण्मेघवाहनः" इत्यमरः । स्वायम्भुवं = स्वयं भवती म्भूः, "भुवः संज्ञान्तरयोः ३।२।१७९" इति क्विप्प्रत्ययः । "हिरण्यगर्भो स्वयम्भूश्चतुराननः" इत्यमरः । स्वयम्भुवः इदं स्वायम्भुवं तत् । " इत्यण्, "तद्धितेष्वचामादेः" इति आदिवृद्धिश्च । "संज्ञापूर्वको विधि इति अनित्यत्वात् "ओर्गुणः" इति गुणो न ॥

**भावार्थः**-पार्वत्याः शङ्करपरिचर्यासमये शतमुखप्रमुखा मखभुजस्ता रिभवमसहमानास्तन्निवेदनाय परमेष्ठिनः सद्म प्रपेदिर इति भावः ।

**भाषा**—जिस समय पार्वती शङ्कर भगवान की सेवा कर रहीं

य तारकासुर से पीड़ित होकर, इन्द्रादि देवता, ब्रह्मा जी से प्रार्थना करने के थे, सत्य लोक में गये थे ।

षां तद्दर्शनप्रकारमाह—

तेषामाविरभूद् ब्रह्मा, परिम्लानमुखश्रियाम् ।
सरसां सुप्तपद्मानां प्रातर्दीधितिमानिव ॥ २ ॥

उन मलिन मुख के सामने, सानन्द विधि शोभित हुए ।
मानो सुबह मुकुलित कमल सर मध्य रवि शोभित हुए ॥

अन्वयः—परिम्लानमुखश्रियां तेषां ब्रह्मा, सुप्तपद्मानां सरसां प्रातः दीधिति-
=तारकान् इव, आविरभूत् ॥

व्याख्या—परिम्लानमुखश्रियां=परिक्षीणवदनशोभानां, तेषां=देवानां, ब्रह्मा=
तामहः, सुप्तपद्मानां=मुकुलिताऽरविन्दानां, सरसां=कासाराणां, प्रातः=
ाते, दीधितिमान् इव=सूर्य इव, आविरभूत्=प्रादुरभूत्, प्रकाशोऽभूदित्यर्थः ॥

व्युत्पत्तिः—परिम्लानमुखश्रियां=मुखस्य श्रीः मुखश्रीः, परिम्लाना मुखश्रीः
ां ते परिम्लानमुखश्रियः, तेषां परिम्लानमुखश्रियां । "म्लै हर्षक्षये" इति धातोः
त्ययेन म्लानपदसिद्धिः । ब्रह्मा="ब्रह्माऽऽत्मभूः सुरज्येष्ठः परमेष्ठी पितामहः"
मरः । सुप्तपद्मानां=सुप्तानि पद्मानि येषु तानि सुप्तपद्मानि, तेषां सुप्तपद्मानां,
ष्वप् शये" इति धातोः क्तप्रत्ययेन सम्प्रसारणेन च सुप्तपदसिद्धिः । सरसां=
सारः सरसी सरः" इत्यमरः । प्रातः=स्वरादिपाठादस्य "स्वरादिनिपातमव्य-
" इति अव्ययत्वम् । दीधितिमान्=प्रशस्ताः दीधितयः सन्ति अस्य इति
धितिमान्, प्राशस्त्ये मतुप्प्रत्ययः । आविरभूत्="प्रकाशे प्रादुराविः स्यात्"
मरः । अत्रोपमाऽलङ्कारः । अनया उपमया देवखेदच्छेदकारी प्रसादः सूचितो
ति ॥

भावार्थः—प्रातः काले मुकुलितपद्मानां सरोवराणां सूर्य इव, कल्पान्तकृशा-
ल्पेन तारकासुरभुजबलोष्मणा परिम्लानमुखानां बर्हिर्मुखानां दयानिधिः पिता-
: स्वयमेवात्मानं दर्शितवानिति भावः ।

भाषा—प्रातः काल में मुकुलित कमलों के तालाब के सन्मुख सूर्य के प्रादु-
के समान, तारकासुर के भय से उदास मुख वाले इन्द्रादि देवताओं के
, दयासागर ब्रह्मदेवजी स्वयं ही प्रगट हुवे ।

देवानां ब्रह्मोपस्थानप्रकारमाह—

**अथ सर्वस्य धातारं, ते सर्वे सर्वतोमुखम् ।**
**वागीशं वाग्भिरर्थ्याभिः, प्रणिपत्योपतस्थिरे ॥ ३ ॥**

करके प्रणाम प्रथम अमित, शुचि अर्थमय वागीश की ।
सुर प्रार्थना करने लगे, उस चार मुख जगदीश की ॥

**अन्वयः**—अथ सर्वे ते सर्वतोमुखं वागीशं सर्वस्य धातारं प्रणिपत्य अ वाग्भिः उपतस्थिरे ॥

**व्याख्या**—अथ = अनन्तरं, ब्रह्माऽऽविर्भावाऽनन्तरमित्यर्थः, सर्वे= ते = देवाः, सर्वतोमुखं=विश्वतोमुखं, चतुर्मुखमित्यर्थः, वागीशं = सर्वस्य=सम्पूर्णस्य, जगत इति शेषः, धातारं=स्रष्टारं, ब्रह्माणमित्यर्थः, प्र नमस्कृत्य, अर्थ्याभिः=यथार्थभूताभिः, वाग्भिः=वाणीभिः, उपतस्थिरे=

**व्युत्पत्तिः**—सर्वतोमुखं = सर्वतः समन्ततः मुखानि यस्य सः सर्व तं सर्वतोमुखं । वागीशं=वाचाम् ईशः वागीशः, तं वागीशं । "वागीशे तिः समौ" इत्यमरः । प्रणिपत्य = प्रण्युपसर्गपूर्वकात् "पत्लृ पतने" इति क्त्वा, तस्य ल्यप् च । अर्थ्याभिः=अर्थात् अनपेताः अर्थ्याः, ताभिः अर्थ "धर्मपथ्यर्थन्यायादनपेते" इति यत्प्रत्ययः । उपतस्थिरे = उपोपसर्ग "ष्ठा गतिनिवृत्तौ" इति धातोः लिट् । 'उपाद्देवपूजासङ्गतिकरणमित्रक ष्विति वाच्यम्' इति वार्तिकेन आत्मनेपदम् ॥

**भावार्थः**—अथ ते सर्वे देवाः अखिलजगन्निर्माणकर्तारं चतुर्मुखं प्रणम्य यथार्थभूताभिर्वाग्भिः स्तोतुं समुपचक्रिरे इति भावः ।

**भाषा**—ब्रह्मदेव के दर्शन होने पर, वे सब देवता, सकल जगत् के करने वाले, चतुर्मुख ब्रह्मदेवको, यथार्थवाणी से, नमस्कार पूर्वक स्तुति क

स्तुतिप्रकारं प्रपञ्चयति "नमः" इत्यादिभिर्द्वादशभिः श्लोकैः ।
तत्रादौ ब्रह्मणस्त्रिमूर्तिसृष्टौ कारणत्वमाह—

**नमस्त्रिमूर्तये तुभ्यं, प्राक्सृष्टेः केवलात्मने ।**
**गुणत्रयविभागाय, पश्चाद्भेदमुपेयुषे ॥ ४ ॥**

पहले सृजन के एक, पीछे तीन मूर्ति प्रणाम हैं ।
तू विष्णु है, तू शम्भु है, तू विधि अनन्त प्रणाम है ॥

**अन्वयः**—हे भगवन् ! सृष्टेः प्राक् केवलात्मने, पश्चात् गुणत्रयवि

म् उपेयुषे, अत एव त्रिमूर्तये, तुभ्यं नमः ॥

**व्याख्या**—हे भगवन्नित्यध्याहार्य व्याख्येयं । सृष्टेः = सर्गात्, प्राक् = पूर्वं, लात्मने = एकरूपाय, पश्चात् = अनन्तरं, सृष्टिप्रवृत्तिकाले इत्यर्थः, गुणत्रय-ागाय=सत्वादित्रयविभागार्थम्, भेदम्=उपाधिम्, स्रष्टृत्वादिकमित्यर्थः, उपे-=प्राप्तवतेः अत एव—त्रिमूर्तये=ब्रह्मविष्णुरुद्ररूपिणे, तुभ्यं=भवते, नमः = स्कारः, अस्तीति शेषः ।

**व्युत्पत्तिः**—सृष्टेः = प्राक्छब्दयोगे "अन्यारादितरर्ते दिक्छब्दाञ्चूत्तरपदाहियुक्ते" इति सूत्रेण ( अञ्चूत्तरपदयोगत्वात् ) पञ्चमी । केवलात्मने=केवलः त्मा यस्य सः केवलात्मा, तस्मै केवलात्मने । "आत्मा वा इदमेक एवाऽग्र सीत्" इति श्रुतेः । "निर्णीते केवलमिति त्रिलिङ्ग त्वेककृत्स्नयोः" इत्यमरः । ुत्रयविभागाय=विभज्यते अनेनेति विभागः । त्रयः अवयवाः यस्य तत् त्रयं, ानां त्रयं गुणत्रयम् । "गुणाः सत्त्वं रजस्तमः" इत्यमरः । गुणत्रयम् एव ागः यस्य सः गुणत्रयविभागः, तस्मै गुणत्रयविभागाय, उपेयुषे=उपोपसर्गपू-ात् "इण् गतौ" इति धातोः "उपेयिवाननाश्वाननूचानश्च ३।२।१०५" इति ण क्वसुप्रत्ययाऽन्तो निपातः । त्रिमूर्तये = तिस्रः मूर्तयः यस्य सः त्रिमूर्तिः तस्मै र्तये । "मूर्तिः काठिन्यकाययोः" इत्यमरः । तुभ्यं = नमः शब्दयोगे "नमः स्तस्वाहास्वधाऽलंवषड्योगाच्च" इति चतुर्थी ।

क्तं च—"नमो रजोजुषे सृष्टौ, स्थितौ सत्वमयाय च ।
तमोरूपाय संहारे, त्रिरूपाय स्वयम्भुवे" इति ॥

**भावार्थः**—हे भगवन् ! सृष्टेः प्राक् एकरूपाय, पश्चात् सृष्टिप्रवृत्तिकाले त् सत्त्वरजस्तमोगुणमधिष्ठाय ब्रह्मविष्णुरुद्रात्मने त्रिरूपाय तुभ्यं नमोऽ-ति भावः ।

**भाषा**—हे भगवन् ! सृष्टि के पहिले एकरूप धारण करने वाले, अनन्तर प्रवृत्ति काल में, क्रम से सत्व, रज, तम गुणों को अधिष्ठितकर, ब्रह्म, विष्णु, ा त्रिमूर्तिरूप उपाधिको धारण करने वाले आपको अनेक प्रणाम हैं ।

जगत्सृष्टिप्रकारमाह—

**यदमोघमपामन्तरुप्तं बीजमज ! त्वया ।**
**अतश्चराचरं विश्वं, प्रभवस्तस्य गीयसे ॥ ५ ॥**

जल में अजन्मा ! तव करों से बीज बिखराया गया ।
इससे चराचर-सुजन कर्त्ता तू सदा गाया गया ॥

**अन्वयः**—हे अज ! अपाम् अन्तः त्वया यत् अमोघं बीजम् उप्तम् चराऽचरं विश्वम् ( उत्पन्नम् ), तस्य प्रभवः गीयसे ।

**व्याख्या**—हे अज=हे अजन्मन् ! अपाम्=जलानाम्, अन्तः= त्वया=भवता, यत्, अमोघम्=अवन्ध्यं, सफलमित्यर्थः, बीजं=वीर्यम् निक्षिप्तम्, [ मुक्तम् इति पाठे विसृष्टम् इत्यर्थः ], अतः=अस्मात्, ते चराऽचरं=चलाऽचलं, स्थावरजङ्गमात्मकम्, विश्वं = जगत् [उत्पन्नम् इ तस्य=विश्वस्य, प्रभवः=कारणं, गीयसे=अभिधीयसे । 'अदश्चराऽचरं वि वस्तस्य गीयते' इति पाठे, अदः=इदं, चराचरं, विश्वं तस्य=बीजस्य, फलं, गीयते । लोकैः इति शेषः ।

**व्युत्पत्तिः**—अज=न जायते इति अजः, तत्सम्बुद्धौ हे अज !, न मोघम् अमोघं । बीजं="शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च" इ उप्तम्="डुवप् बीजतन्तुसन्तानयोः" इति धातोः क्तप्रत्ययः, सम्प्रसा अतः=इदं शब्दात् पञ्चम्यर्थे तसिः । चराऽचरं=चरन्तीति चराः, न च राः, चराश्च अचराश्च चराचरस्तं चराचरं, समाहारे द्वन्द्वैकवद्भावः । प्रभ वति अस्मात् इति प्रभवः, "ऋदोरप्" इति अप्प्रत्ययः । अत्राऽर्थे मनुः

"हिरण्यगर्भो भगवान् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु बीजमवासृजत्" ( १-८ )
"तदण्डमभवद्धैमं सहस्रांऽशुसमप्रभम्
तस्मादण्डात् समुत्पन्नं जगत् स्थावरजङ्गमम्" ( १-९ ) इति

**भावार्थः**—हे ब्रह्मन् ! त्वया पूर्वं जलं निर्माय, तदन्तर्भागे नि वीर्यस्य विभूतिरेव चराचरात्मकमिदं विश्वमिति मन्वादयो वदन्तीति भाव

**भाषा**—हे ब्रह्मन् ! आपने सर्व प्रथम जल की सृष्टिकर उसमें अ का वपन किया था, उसीसे चराचर विश्व उत्पन्न हुवा, अतः आप कारण गाये जाते हैं ।

न केवलं सृष्टिरेव त्वदुपक्रमा, अपि तु स्थितिसंहारावपीत्याह—

तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन् ।
प्रलयस्थितिसर्गाणामेकः कारणतां गतः ॥ ६ ॥

इस सृष्टि के पहले बढ़ाकर शक्ति को निज सम्पदा ।
तू सृष्टि करता पालता संहारता भी है सदा ॥

**अन्वयः**—एकः त्वं तिसृभिः अवस्थाभिः महिमानम् उदीरयन् प्रलयस्थिति-सर्गाणां करणतां गतः ।

**व्याख्या**—एकः=एकाकी, सृष्टेः प्राक्केवल इत्यर्थः, त्वं=भवान्, तिसृभिः=त्रिसंख्याकाभिः, त्रैगुण्यमयीभिरित्यर्थः, शिवविष्णुब्रह्मस्वरूपाभिरिति यावत्, अवस्थाभिः=दशाभिः, महिमानं=महत्त्वम्, निजशक्तिमित्यर्थः, उदीरयन्=जृम्भयन्, प्रलयस्थितिसर्गाणां=संहारपालनसृष्टीनां, कारणताम्=उपादानादिहेतुतां, गतः=प्राप्तः ( असीति शेषोऽर्थः ) । इदं "पश्चाद् भेदमुपेयुषे" इत्यस्य विवरणमतो न गताऽर्थत्वदोषः ।

**व्युत्पत्तिः**—एकः="एकाकी त्वेक एककः" इत्यमरः । महिमानं = महतः भावः महिमा, तं महिमानं । महच्छब्दात् "पृथ्वादिभ्यः इमनिज्वा" इति इमनिच् प्रत्ययः । उदीरयन् = उदीरयतीति उदीरयन्, प्रलयस्थितिसर्गाणां = प्रकृष्टो लयः प्रलयः, "कुगतिप्रादयः" इति समासः । "संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि" इत्यमरः । प्रलयश्च स्थितिश्च सर्गश्च प्रलयस्थितिसर्गाः' तेषां प्रलयस्थितिसर्गाणां="सर्गः स्वभावनिर्मोक्षनिश्चयाऽध्यायसृष्टिषु" इत्यमरः । कारणतां = कारणस्य भावः करणता, तां कारणतां "तस्य भावस्त्वतलौ" इति तल्प्रत्ययः, तदन्तस्य "तलन्तं स्त्रियाम्" इति लिङ्गाऽनुशासनेन स्त्रीत्वात् "अजाद्यतष्टाप्", इति टाप् प्रत्ययः । "हेतुना कारणं बीजम्" इत्यमरः ।

**भावार्थः**—हे परमेष्ठिन् ! एकाकी त्वं हरिहरहिरण्यगर्भस्वरूपैरवस्थाविशेषैर्माहात्म्यं प्रकाशयन् ( निजमेव वैभवं मूर्तित्रयभेदेन प्रकटयन्निति यावत् ) संहाररक्षणोत्पादनानामुपादानतां प्राप्तोऽसीति भावः ।

**भाषा**—सृष्टिके पहिले अकेले आप हरि, हर, हिरण्यगर्भ इन तीन अवस्था विशेष से अपनी शक्ति के प्रभाव को प्रगट करते हुये, संसार के संहार, पालन, सृष्टि की कारणता को प्राप्त होते हैं ।

अथ मिथुनसृष्टिप्रकारमाह—

स्त्रीपुंसावात्मभागौ ते, भिन्नमूर्तेः सिसृक्षया ।
प्रसूतिभाजः सर्गस्य, तावेव पितरौ स्मृतौ ॥ ७ ॥

हैं भाग तन के स्त्री पुरुष फल सकल तेरी दृष्टि के ।
वे ही बने माता पिता उत्पत्ति वाली सृष्टि के ॥

अन्वयः—स्त्रीपुंसौ सिसृक्षया भिन्नमूर्तेः ते आत्मभागौ स्तः । तौ एव प्रसूति-
भाजः सर्गस्य पितरौ स्मृतौ ।

व्याख्या—स्त्रीपुंसौ = नारीपुरुषौ, सिसृक्षया = सृष्टीच्छया, भिन्नमूर्तेः
भिन्नकायस्य, द्विधाकृतवपुषः इत्यर्थः, ते=तव, आत्मभागौ=देहांऽशौ स्तः । तौ
देहांऽशौ प्रसूतिभाजः = उत्पत्तिभाजः, = सर्गस्य = सृष्टेः निजसृष्टेः इत्यर्थः, पि-
रौ = मातापितरौ, स्मृतौ = कथितौ, वृद्धैः इति शेषः ।

व्युत्पत्तिः—स्त्रीपुंसौ=स्त्री च पुमांश्च स्त्रीपुंसौ, "अचतुरविचतुरसुचतुर-
पुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाऽहर्दि-
वसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः
४।७७" इति सूत्रेण अच्प्रत्ययान्तो निपातः । "स्त्री योषिदबला योषा नारी
सीमन्तिनी वधूः" इति, "स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषाः नराः" इति=तव,
चाऽमरः । सिसृक्षया = स्रष्टुम् इच्छा सिसृक्षा, तया सिसृक्षया भिन्नमूर्तेः भूतानां=
भिन्ना=मायावलम्बेन प्रकृतिपुरुषात्मना द्विधाकृता, मूर्तिः=शरीरं, यस्य
भिन्नमूर्तिः, तस्य भिन्नमूर्तेः । ते="तेमयावेकवचनस्य" इति युष्मच्छब्दस्य
आदेशः । आत्मभागौ=आत्मनः भागौ आत्मभागौ "आत्मा यत्नो धृतिर्बुद्धि
स्वभावो ब्रह्मवर्ष्म च" इत्यमरः । प्रसूतिभाजः=प्रसूतिं भजतीति प्रसूतिभाक्
तस्य प्रसूतिभाजः । "भजो ण्विः ३। २। ६२" इति ण्विप्रत्ययः । सर्गस्य=
सृज्यते इति सर्गः, तस्य सर्गस्य । पितरौ=माता च पिता च पितरौ, "पितामात्रा" इति एकशेषः । "मातापितरौ पितरौ मातरपितरौ प्रसू जनयितारौ"
इत्यमरः । अत्र मनुः—

"द्विधा कृत्वाऽऽत्मनो देहमर्धेन पुरुषोऽभवत् ।
अर्धेन नारी तस्यां स विराजमसृजत्प्रभुः १–३२" ॥ इति

भगवतो विराड्रूपस्य शरीरभेदमेव, मन्वादयो मिथुनसर्गप्रकरणे स्त्रीपुरुषा-
त्मना व्यपदिशन्तीत्यर्थः ।

भावार्थः—हे पितामह ! स्रष्टुमिच्छया मायावलम्बेन प्रकृतिपुरुषात्मना द्वि-
धाकृतशरीरस्य तव यौ स्त्रीपुंसरूपात्मांशौ, तावेवोत्पत्तिभाजो निजसृष्टेर्मातापितरौ
स्मृताविति भावः ।

भाषा—सृष्टि के इच्छा से माया का अवलम्बन कर, प्रकृति, पुरुष, रूप भिन्न मूर्ति धारण करने वाले आप के शरीर के, स्त्री, और पुरुष, ये दो भाग हैं। वे ही उत्पन्न होने वाली सृष्टि के माता पिता कहे जाते हैं।

अथ वेदान्ताभिमतसृष्टिप्रलयप्रसङ्गेन स्तुतिमाह—

**स्वकालपरिमाणेन, व्यस्तरात्रिन्दिवस्य ते।**
**यौ तु स्वप्नाऽवबोधौ तौ, भूतानां प्रलयोदयौ ॥ ८ ॥**

**तेरी निशा जो दिवस सोने जागने के हैं बने।**
**वे प्राणियों के प्रलय है उत्पत्ति क्रम से है बने ॥**

**अन्वयः**—स्वकालपरिमाणेन व्यस्तरात्रिन्दिवस्य ते, यौ तु स्वप्नाऽवबोधौ, तौ [ एव ] भूतानां प्रलयोदयौ भवतः।

**व्याख्या**—स्वकालपरिमाणेन=निजसमयप्रमाणेन "चतुर्युगसहस्राणि ब्रह्म-णो दिनमुच्यते" इत्युक्तरूपेणेत्यर्थः, व्यस्तरात्रिन्दिवस्य=विभक्तनक्तन्दिवसस्य-ते=तव, यौ तु स्वप्नाऽवबोधौ=ये तु निद्राजागरणे, तौ=स्वप्नाऽवबोधौ [ एव ], भूतानां = प्राणिनां, प्रलयोदयौ = संहारसृष्टी भवतः।

**व्युत्पत्तिः**—स्वकालपरिमाणेन=स्वस्य कालः स्वकालः "स च द्विपरार्धसंव-त्सरपरिमितः," तस्य परिमाणम्=इयत्ता, स्वकालपरिमाणं' तेन स्वकालपरिमा-णेन व्यस्तरात्रिन्दिवस्य=रात्रौ च दिवा च रात्रिन्दिवम्' "अचतुर०" इत्यादिना अच्प्रत्ययान्तो निपातः। व्यस्तं रात्रिन्दिवं यस्य सः व्यस्तरात्रिन्दिवः, तस्य व्यस्त-रात्रिन्दिवस्य। स्वप्नाऽवबोधौ=स्वप्नश्च अवबोधश्च स्वप्नावबोधौ। प्रलयोदयौ= प्रलयश्च उदयश्च प्रलयोदयौ। यदाहुः—

"यदा स देवो जागर्ति तदेदं चेष्टते जगत्।
यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति" १—५२। इति।

एतच्च दैनन्दिनसृष्टिप्रलयाऽभिप्रायकं, महाप्रलयस्य ब्रह्मणो वर्षशताऽन्ते भावित्वात्।

**भावार्थः**—हे सुरज्येष्ठ! परार्धपरिमितेनात्मनः परमायुषा कल्पिताहोरात्र-विभागस्य तव निद्रैव जगतो महाप्रलयः, तव प्रबोध एव जगतः सर्गो भवतीति भावः।

**भाषा**—स्वकीय काल परिभाषा से परिकल्पित दिन, और रात्रि के विभागमें-आप का शयन हीं जगत् का महाप्रलय है, और आपका प्रबोध ही जगतकी सृष्टिहै।

ननूपादानादिना विना कथं स्वप्नप्रबोधमात्रेण जगतः प्रलयोद्भवावु त आह—

जगद्योनिरयोनिस्त्वं, जगदन्तो निरन्तकः ।
जगदादिरनादिस्त्वं, जगदीशो निरीश्वरः ॥ ९ ॥

तू विश्व योनि अयोनि है तू विश्व पालक काल है ।
तू विश्व आदि अनादि है तेरा न कोई पाल है ॥

**अन्वयः**—हे भगवन् ! त्वं जगद्योनिः, स्वयम् अयोनिः, जगदन्तः निरन्तकः, त्वं जगदादिः, अत एव अनादिः, त्वं जगदीशः, स्वयं निरीश्वर

**व्याख्या**—हे भगवन् ! त्वं = भवान्, जगद्योनिः = लोककारणं, अयोनिः = अकारणकः, अनादित्वादित्यर्थः, जगदन्तः = लोकसंहर्ता, स्वयं न्तकः=अन्तरहितः, नित्यत्वादित्यर्थः, त्वं=भवान्, जगदादिः=लोकादिः, प्रागपि सन्नित्यर्थः, अत एव अनादिः = आदिरहितः, त्वं भवान्, जगदी लोकेश्वरः, नियन्ता इत्यर्थः, स्वयं निरीश्वरः = ईश्वररहित, अनियम्य इ असीति शेषः ॥

**व्युत्पत्तिः**—जगद्योनिः = गच्छतीति जगत्, "वर्तमाने पृषन्महद्बृह च्छतृवच्च" इति निपातः । "त्रिष्वथो जगति लोको विष्टपं भुवनं जगत्" मरः । जगतः योनिः जगद्योनिः, अयोनिः = न विद्यते योनिः यस्य सः अ जगदन्तः=अन्तयतीति अन्तः । पचाद्यच् । जगतः अन्तः जगदन्तः । निरन निर्गतः अन्तः यस्मात् सः निरन्तकः, "शेषाद्विभाषा" इति समासान्तः जगदादिः=जगताम् आदिः जगदादिः, अनादिः = अविद्यमानः आदिः सः अनादिः, जगदीशः=जगताम् ईशः जगदीशः । निरीश्वरः=ईष्टे असौ "ईश ऐश्वर्ये" इति धातोः "स्थेशभासपिसकसो वरच्" इति वरच्प्रत्ययः श्वरः पतिरीशिता" इत्यमरः । निर्गतः ईश्वरः यस्मात् सः निरीश्वरः । वा इमानि भूतानि जायन्ते" इत्यादिश्रुतिरेवाऽत्र प्रमाणम् । 'अत्र अयो त्यादौ नञ्तत्पुरुषसमासाश्रयणे विरोधः, बहुव्रीहिसमासेन तु तत्परिहार इ रोधाभासाऽलङ्कारः । तल्लक्षणं यथा साहित्यदर्पणे—

"जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः ।
क्रिया क्रियाद्रव्याभ्यां यद्द्रव्यं द्रव्येण वा मिथः ।
विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः ॥" इति ॥

**भावार्थः**—हे लोकेश ! त्वं स्थावरजङ्गमात्मकस्य प्रपञ्चस्योत्पादनकारणमसि, पुनः कारणान्तररहितोऽसि, त्वं जगतः संहारकोऽसि, पुनस्त्वं संहर्तृरहितोऽसि, ाद्योनित्वाज्जगदुत्पत्तेः पूर्वं विद्यमानोऽसि, त्वं पुनरादिरहितोऽसि, जगतामीऽसि, त्वं पुनरीशान्तररहितोऽसीति भावः ।

**भाषा**—हे भगवन् ! आप स्थावर जङ्गमात्मक सकल प्रपञ्चजगत् के उत्पान के कारण होते हुये भी स्वयं कारणान्तर से रहित है । ऐसेही जगत् का नाश रने वाले होकर भी स्वयं नाश रहित है । एवं आप जगत के आदि में विद्यान है, किन्तु स्वयं अनादि है । तथा आप जगत के ईश्वर हैं, परन्तु आप का श्वर कोई नही है ।

ननूत्पादकान्तरराहित्ये दृश्यमानस्य चतुर्मुखस्य कथमुत्पत्तिरित्याह—

**आत्मानमात्मना वेत्सि, सृजस्यात्मानमात्मना ।**
**आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥ १० ॥**

**तू जानता निज को तथा निज सृष्टि है करता स्वयम् ।**
**तू शक्ति शाली है अतः निज को हरण करता स्वयम् ॥**

**अन्वयः**—हे भगवन् ! त्वम् आत्मानम् आत्मना एव वेत्सि, आत्मानम् व आत्मना सृजसि । कृतिना आत्मना आत्मनि एव प्रलीयसे ॥

**व्याख्या**—हे भगवन् ! त्वम्, आत्मानम्=निजम्, ब्रह्मरूपेण उत्पिपादयिषितं वस्वरूपमित्यर्थः । आत्मना=स्वयमेव, वेत्सि=जानासि, सर्वाऽपि क्रिया कर्तव्याज्ञानपूर्विका इति भावः, आत्मानं=निजम्, आत्मना=स्वयम् एव, सृजसि=त्पादयसि, अधिष्ठानमपि स्वयमेवेत्यर्थः । "स्वे महिम्नि प्रतिष्ठितम्" इति श्रुतेः । तिना=कृतकृत्येन, स्वावतारकार्याणां विधानान्निर्वृतेनेत्यर्थः । आत्मा=स्वदेहेन, आत्मनि एव, प्रलीयसे=प्रलीनो भवसि ॥

**व्युत्पत्तिः**—वेत्सि="विद ज्ञाने" इति धातोर्लट् । कृतिना=कृतम् अयाऽस्तीति कृती, तेन कृतिना, इनि प्रत्ययः । प्रलीयसे=प्रोपसर्गपूर्वकात् "ली- श्लेषणे" इति दैवादिकात् धातोः कर्तरि लट् । "आत्मना=प्रकृत्यादिभ्य उपसङ्ख्यानम्" इति तृतीया ॥ अत्र मनुः—

"एवं स सर्वं सृष्ट्वेदं मां चाचिन्त्यपराक्रमः ।
आत्मन्यन्तर्दधे भूयः कालं कालेन पीडयन् ॥" इति ।

अत्र स्वाधीनात्मसर्गस्थितिप्रलयस्याऽस्य ब्रह्मणः पराधीनसर्गादेः प्र
व्यतिरेकोक्तिः ।

**भावार्थः**—हे चतुरानन ! त्वमादावात्मदेहस्वरूपं तत्सर्गोपायं च स्व
जानासि, ततः परं तं सृजसि, सर्गानन्तरं पुनः परार्द्धद्वयवत्सरपर्यन्तं रक्षि
देहे स्वावतारकार्येषु च निर्वृत्तेषु कृतकृत्यः सन् स्वदेहं स्वात्मन्येव लीं
षीति भावः ।

**भाषा**=हे प्रभो ! आप आदिमें स्वकीय देहस्वरूप को तथा उसके
उपाय को भी स्वयं ही जानते है । और उसकी सृष्टि भी करते है । अं
परार्धं द्वय वत्सर पर्यन्त स्वदेह को रक्षितकर, स्वकीय अवतार कार्य पूर्ण ह
कृतकृत्य होकर स्वदेह को स्वात्मा में ही लीन कर लेते हैं ।

ब्रह्मणोऽणिमादिसिद्धिषु स्वाधीनत्वमाह—

**द्रवःसङ्घातकठिनः, स्थूलः सूक्ष्मो लघुर्गुरुः ।**
**व्यक्तो व्यक्तेतरश्चाऽसि, प्राकाम्यं ते विभूतिषु ॥ ११ ॥**

**द्रव, कठिन, इन्द्रिय-ग्राह्य और अग्राह्य लघु गुरु युक्त है ।**
**अणिमादिमय है कार्य कारण और उनसे मुक्त है ॥**

**अन्वयः**—हे भगवन् ! त्वम् द्रवः, सङ्घातकठिनः, स्थूलः, सूक्ष्मः,
गुरुः, व्यक्तः, व्यक्तेतरश्च असि । विभूतिषु ते प्राकाम्यम् अस्तीति शेषः ॥

**व्याख्या**—हे भगवन् ! हे ब्रह्मन् ! त्वम्, द्रवः = रसात्मकः, सरित्
दिवदित्यर्थः, सङ्घातकठिनः = निबिडसंयोगकठोरः, महीधरादिवदि
स्थूलः = इन्द्रियग्राह्यः, घटादिवदित्यर्थः, सूक्ष्मः = अतीन्द्रियः, इन्द्रि
ग्राह्यः, परमाण्वादिवदित्यर्थः, लघुः = उत्पतनयोग्यः, तूलादिवदित्यर्थः, गु
अचलनीयः, हेमाद्रिवदित्यर्थः, व्यक्तः = कार्यरूपः, व्यक्तेतरश्च = व्यक्त
कारणरूपश्चेत्यर्थः, असि । एवं विभूतिषु=ऐश्वर्येषु, अणिमादिष्वित्यर्थः, ते
प्राकाम्यं = यथाकामत्वम्, अस्तीति शेषः ॥

**व्युत्पत्तिः**—सङ्घातकठिनः = सङ्घातेन कठिनः, सङ्घातकठिनः । विभू
"विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा" इत्यमरः । प्राकाम्यं = प्रकामस्य
प्राकाम्यं, ष्यञ्प्रत्ययः । अणिमादयोऽष्टौ च वक्ष्यमाणश्लोकोक्तदिशा ज्ञेयाः

"अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा ।
ईशिता वशिता चैव तथा कामावशायिता" ॥ इति ।

भावार्थः—हे हिरण्यगर्भ ! त्वं सरित्समुद्रादिवद्रसात्मकोऽसि, पर्वतादिवत् ठिनोऽसि, घटादिवदिन्द्रियग्रहणयोग्योऽसि, परमाण्वादिवदतीन्द्रियोऽसि, तूला-दिवदुत्पवनयोग्योऽसि, हेमाद्रिवदचलोऽसि, कार्यरूपोऽसि, कारणरूपश्चासि, इत्थ-म्भूतं रणिमादिसिद्धिषु तव यथाकामत्वमस्तीति भावः ।

भाषा—हे ब्रह्मन् ! आप सरित् समुद्रादि के समान द्रव रूप रसात्मक है, तादिके सदृश कठिन है, घटादि पदार्थवत् इन्द्रिय से ग्रहण योग्य है, परमा-णादि के तरह अतीन्द्रिय भी है, रुई की नाई आकाश में उड़ने के योग्य है, त के तुल्य अचल भी हैं, एवं आप कार्यरूप है, और कारण रूप भी है, इस ह अणिमादि अष्टसिद्धियों में आपका यथेष्ट प्राकाम्य है। अर्थात् आप जो चाहें हो सकते है ।

अपौरुषेयाणां वेदानां ब्रह्मण उद्भूतत्वमाह—

**उद्घातः प्रणवो यासां, न्यायैस्त्रिभिरुदीरणम् ।**
**कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ॥ १२ ॥**

**आरम्भ होता तीन स्वर से तू वही ओंकार है ।**
**फल कर्म जिनका स्वर्ग मख है तू उन्हीं का सार ॥**

अन्वयः—हे भगवन् ! यासां गिराम् उद्घातः प्रणवः, यासां त्रिभिः न्यायैः रणं, यासां कर्म यज्ञः, फलं स्वर्गः, त्वं तासां गिरां प्रभवः असि ॥

व्याख्या—हे भगवन् ! यासां, गिरां = वाचाम्, उद्घातः = उपक्रमः, वः = ओङ्कारः, यासां = गिरां, त्रिभिः = त्रिसङ्ख्यकैः, न्यायैः = स्वरैः, उदा-नुदात्तस्वरितैरित्यर्थः, उदीरणम् = उच्चारणं, यासां = गिरां, कर्म = क्रिया-पाद्यमित्यर्थः, यज्ञः=क्रतुः, ज्योतिष्टोमादिरित्यर्थः, फलं=प्रसवः, स्वर्गः = देवः, त्वं, तासां तादृशां, गिरां, प्रभवः=कारणं, प्रणेता स्मर्ता वा मतभेदेन, सीति शेषः ॥

व्युत्पत्तिः—उद्घातः="प्रक्रमः स्यादुपक्रमः । स्यादभ्यादानमुद्घातः आर-" इत्यमरः । प्रणवः="ओङ्कारप्रणवौ समौ" इत्यमरः । 'उद्घातः प्रणवः' कथनेन उपसंहारस्याऽपि उपलक्षणसूचना भवति ।

"ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वतः ।
दहत्येनः कृतं पूर्वं परस्ताच्च विशेषतः ॥"

इति निरुक्तपरिशिष्टयोर्यास्कः । न्यायैः=नीयन्ते एभिः अर्थविशेषाः इति

न्यायाः=स्वराः, तैः । उक्तं च, "स्वरविशेषादर्थप्रतिपत्तिः" । "यथेन्द्रश
तोऽपराधात्" इति । कर्म=क्रियते यत् तत् कर्म, "डुकृञ् करणे
धातोः औणादिको मन्प्रत्ययः । "कर्म क्रिया" इत्यमरः । यज्ञः=
अनेन अत्र वा यज्ञः, "यज देवपूजादौ" भ्वा० उ० अ० इति धातोः "
यजयतविच्छप्रच्छरक्षो नङ् ३।३।६०" इति सूत्रेण नङ् प्रत्ययः । "यज्ञः
ध्वरो यागः सप्ततन्तुर्मखः क्रतुः "इत्यमरः । प्रभवः=प्रभवति अस्मा
प्रभवः कारणम्, "ऋदोरप्" इति अप्प्रत्ययः ।

अत्रारम्भाऽध्ययनाऽर्थज्ञानवेलायां वेदवाचां सामान्यवाग्भिर्विशेष
नात् व्यतिरेकालङ्कारः ।

भावार्थः—हे हंसवाहन ! या वाक् ओङ्कारेणारब्धा भवति, या
दात्तस्वरितैः स्वरैरुच्चारयन्ति, यया ज्योतिष्टोमादियागः क्रियते, यस्याश्च
प्रतिपाद्यः स्वर्गो भवति, तासां वेदवचसां त्वमुद्भवस्थानमसीति भावः ।

भाषा—जो वाणी ओंकार रूप प्रणवसे आरम्भ की जाती है, जिसक
अनुदात्त, स्वरित इन तीन स्वरों से उच्चारण होता है, जिससे ज्योतिष्टोम
किये जाते है, और जिसका फल स्वर्गप्राप्ति होता है । उस वेदवाणी
उद्भव स्थान है ।

साङ्ख्यसिद्धान्तसिद्धौ प्रकृतिपुरुषावपि त्वमेवेत्याह—

त्वामामनन्ति प्रकृतिं, पुरुषार्थप्रवर्तिनीम् ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥ १३ ॥

पुरुषार्थ हित रत प्रकृति तुमको तत्त्व वेत्ता कह रहे ।
फिर प्रकृतिद्रष्टा भी तुम्ही को ब्रह्मवेत्ता कह रहे ।

अन्वयः—हे भगवन् ! त्वां पुरुषार्थप्रवर्तिनीं प्रकृतिम् आमनन्ति
एव तद्दर्शिनम् उदासीनं पुरुषं विदुः ॥

व्याख्या—हे भगवन् ! त्वां = भवन्तम्, पुरुषार्थप्रवर्तिनीं = भो
प्रवर्तिनीं, प्रकृतिं=मूलकारणम्, आमनन्ति = कथयन्ति । त्वाम् एव =
एव, तद्दर्शिनं=प्रकृतिदर्शकम्, उदासीनं=कूटस्थम्, पुरुषं=पुमांसम्,
वदन्ति । कपिलादय इत्यर्थः ।

व्युत्पत्तिः—पुरुषाऽर्थप्रवर्तिनीं=पुरुषस्य अर्थः=भोगाऽपवर्गरूपः, पु
तस्मै प्रवर्तते इति पुरुषाऽर्थप्रवर्तिनी, तां पुरुषार्थप्रवर्तिनीं । कर्तरि ल्युट्

तिं = "प्रधानं प्रकृतिः स्त्रियाम्" इत्यमरः । "सत्वरजस्तमसां साम्यावस्था
तिः" इति साङ्ख्यदर्शनम् । आमनन्ति=आङुपसर्गपूर्वकात् "म्ना अभ्यासे"
धातोर्लट् । "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमन-
छपश्यर्च्छधौशीयसीदाः" इति म्नास्थाने मनादेशः । साङ्ख्यस्मृतय इति
ः । सत्वरजस्तमसां साम्यावस्था प्रधानमिति साङ्ख्यानां व्यवहारः । तामेव मूल-
तिरिति प्रकृतिरिति च ते व्यवहरन्ति । तदुद्भूतो महदादिप्रपञ्च इति तेषां
म् । "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्वेताश्वतरोपनिष-
तिमाश्रित्य प्रकृतिपुरुषौ शक्तिशक्तिमन्तौ मत्वा अभेदव्यवहारः । तद्दर्शिनं =
=प्रकृतिं, साक्षित्वेन पश्यतीति तद्दर्शी, तं तद्दर्शिनं । णिनिप्रत्ययः । विदुः=
वेद ज्ञाने" इति धातोः "विदो लटो वा" इति झेर्जुसादेशः । "अजामेकां लोहि-
शुक्लकृष्णाम्" इति श्रुतिरत्र प्रमाणम् ।

**भावार्थः**—हे कमलोद्भव ! साङ्ख्यस्मृतयः त्वां पुरुषस्य भोगापवर्गरूपार्थ-
र्तिकां मूलप्रकृतिं व्यपदिशन्ति, प्रकृतिद्रष्टारं कूटस्थं पुरुषमपि त्वामेव विद-
तीति भावः ।

**भाषा**—हे कमलासन ! सांख्यस्मृति आपको पुरुषार्थ के लिये करनेवाली
प्रकृति कहती है, और आप ही को उस प्रकृति का साक्षात्कार करने वाला
दासीन पुरुष भी मानती है ।

क्तप्रकारसिद्धं ब्रह्मणः सर्वोत्कर्षत्वमाह—

**त्वं पितॄणामपि पिता, देवानामपि देवता ।**
**परतोऽपि परश्चासि, विधाता वेधसामपि ॥ १४ ॥**

**तू पितरों का भी पिता है देव देव हरे हरे ।**
**दक्षादि का भी सृष्टि कर्त्ता और पर से भी परे ॥**

**अन्वयः**—हे भगवान् ! त्वं पितॄणाम् अपि पिता, देवनाम् अपि देवता,
तः अपि परश्च असि, वेधसाम् अपि विधाता असि ।

**व्याख्या**—हे भगवन् ! त्वं, पितॄणाम् अपि=अग्निष्वात्तादीनाम् अपि,
ता=जनकः, अतस्तेषामपि तर्पणीय इत्यर्थः । देवानाम् अपि = सुराणाम्
पि, देवता=दैवतम् । परतः अपि=उत्कृष्टेभ्यः अपि, परश्च = उत्कृष्टश्च, असि
र्वोत्तरोऽसीत्यर्थः । वेधसाम् अपि = सृष्टिकर्तॄणां दक्षादीनां प्रजापतीनामपि,
धाता = स्रष्टा, असि ।

**व्युत्पत्तिः**—पिता = "तातस्तु जनकः पिता" इत्यमरः । देवानां न्तीति देवाः, तेषां देवानां, देवता=देव एव देवता, "देवात्तल्" इति तत् "तलन्तं स्त्रियाम्" इति लिङ्गानुशासनात् "अजाद्यतष्टाप्" इति टाप् "वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम्" इत्यमरः । देवानामपि नीय इत्यर्थः । परतः = पञ्चम्यर्थे तसिप्रत्ययः ।

"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसश्च परा बुद्धिर्बुद्धेरात्मा महांस्ततः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥"

इति सर्वोत्तरत्वकथनात् । वेधसाम् = अत्र योगेन सृष्टिकर्तॄणामपि विदधतीति वेधसः, तेषां वेधसाम् ।

**भावार्थः**—हे प्रजापते । त्वमग्निष्वात्तादिपितॄणामपि मानना इन्द्रादिदेवानामप्यधीश्वरोऽसि, प्रपञ्चोत्तीर्णात् मायाशबलात् परात् पुरुषात् पुरुषोऽसि, जगत्सृष्टिकर्तॄणां मरीच्यादीनामपि स्रष्टासीति भावः ।

**भाषा**—हे प्रजापते ! आप अग्निष्वात्तादि पितरों के भी पिता है, देवों के भी देव है, माया शबल पर पुरुष से भी परे है, और जगत् के सृ वाले मरीच्यादि प्रजापतियों के भी सृष्टि कर्ता है ।

अथास्य सर्वात्मकत्वप्रतिपादनेन स्तुतिगोचरत्वं निराकुर्वन् स्तुतिमुपसंहरति

**त्वमेव हव्यं होता च, भोज्यं भोक्ता च शाश्वतः ।
वेद्यं च वेदिता चाऽसि, ध्याता ध्येयं च यत्परम् ॥ १५**

**तू हव्य होता भोज्य भोक्ता तू सनातन है प्रभो ।
तू वेद्य ज्ञाता ध्येय ध्याता तू पुरातन है प्रभो ॥**

**अन्वयः**— शाश्वतः त्वम् एव हव्यं, होता च असि, भोज्यं भोक्ता च वेद्यं वेदिता च असि, ध्याता यच्च परं ध्येयं तच्च असि ।

**व्याख्या**—शाश्वतः = सनातनः, त्वम् एव, हव्यं = होतव्यं, पशुपुरो दिरूपं होमसाधनमित्यर्थः, होता च=हवनकर्ता यजमानश्च, असि । भो भक्ष्यम् , अन्नमित्यर्थः, भोक्ता च = भक्षणकर्ता च, अन्नादश्चेत्यर्थः, असि । ज्ञेयं, वेदिता च = ज्ञाता च, असि । ध्याता = ध्यानकर्ता, स्मर्ता इत्यर्थः, परम् = उत्कृष्टं वस्तु इति शेषः, ध्येयं = ध्यानयोग्यम् , तच्च असि ।

व्युत्पत्तिः—शाश्वतः = शश्वत् भवः, सिद्ध इत्यर्थः, "शेषे" इति अण्
यः । यद्यपि "कालाट्ठञ्" इति सूत्रेण ठञपवादः । अत एव सूत्रकारस्या-
प्रयोगः—"येषां च विरोधः शाश्वतिकः" इति । तथाऽपि प्रयोगवशात्साधुः
वामनः" इति । "शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः" इत्यमरः । हव्यं=
यत्, तत् हव्यं । होता =जुहोतीति होता । "हु दानादनयोः" इति धातोः
तृचौ" इति तृच्प्रत्ययः । भोज्यं=भोक्तुं योग्यं भोग्यं, "भोज्यं भक्ष्ये"
निपातनात् कुत्वाऽभावः । भोक्ता = भुनक्तीति भोक्ता । वेद्यं = वेदितुं योग्यम्
साक्षात्कार्यमित्यर्थः, वेदिता = वेत्तीति वेदिता, साक्षात्कर्तेत्यर्थः । ध्याता=
तीति ध्याता, "ध्यै चिन्तायाम्" इति धातोः तृच्प्रत्ययः । ध्यानं नाम
त्कारसाधनभूतप्रत्ययविशेषप्रवाहः ।

भावार्थः—हे विधातः ! नित्यस्त्वमेव पशुपुरोडाशादिहोमसाधनद्रव्यं यज-
मानश्चासि, त्वमेव यागादिफलभूतस्वर्गादिरूपस्तद्भोक्ता चासि, त्वमेव प्रपञ्चः
साक्षी चासि, त्वमेवोपासक उपास्यश्चासीति भावः ।

भाषा—हे भगवन् ! आपही पशु, पुरोडाशादि होम साधन द्रव्य है, और
यजमान भी आपही है, आपही यज्ञ यागादि प्रधानफल भूत स्वर्ग रूप है, और
के भोक्ता भी आपही है, आपही प्रपञ्च है, और प्रपञ्च के साक्षी भी आपही
था आपही उपासक है, और उपास्य भी आप ही है ।

तिमुपसंहरन् ब्राह्मणः प्रतिवचनमाह—

**इति तेभ्यः स्तुतीः श्रुत्वा यथार्था हृदयङ्गमाः ।**
**प्रसादाभिमुखो वेधाः प्रत्युवाच दिवौकसः ॥ १६ ॥**

**यों प्रार्थना सुनकर सुरों की विधि कृपा करने लगे ।**
**अतिमुग्ध होकर देवगण से, इस तरह कहने लगे ॥**

अन्वयः—वेधाः इति तेभ्यः यथार्थाः हृदयङ्गमाः स्तुतीः श्रुत्वा प्रसादाभि-
सन् दिवौकसः प्रत्युवाच ॥

व्याख्या—वेधाः = ब्रह्मा, इति = एताः, तेभ्यः = देवेभ्यः, यथार्थाः =
अत एव हृदयङ्गमाः=मनोहराः, स्तुतीः=स्तोत्राणि, श्रुत्वा = आकर्ण्य,
ऽभिमुखः सन् = अनुग्रहतत्परः सन्, दिवौकसः = देवान्, प्रत्युवाच=
वीत् ॥

व्युत्पत्तिः—वेधाः=विदधातीति वेधाः, "स्रष्टा प्रजापतिर्वेधा विधाता वि-

श्वसङ्विधिः" इत्यमरः । तेभ्यः = "आख्यातोपयोगे" इति सूत्रेण अपादा
"अपादाने पञ्चमी" इति पञ्चमी । हृदयङ्गमाः = हृदयं गच्छन्तीति हृद
"गमेः सुपि वाच्यः" इति खच्प्रत्ययः । "अरुर्द्विषदजन्तस्य मुम्" इति
गमः । "चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः"इत्यमरः । स्तुतीः=
स्तोत्रं स्तुतिर्नुतिः" इत्यमरः । प्रसादाभिमुखः=प्रसादे अभिमुखः प्रसादाभि
दिवौकसः="सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः" इत्यमरः ।

**भावार्थः**—स्वयम्भूः देवेभ्यः इत्थम्भूताः सत्याः मनोहराः स्तुतीरा
नुग्रहपरः सन् देवान् प्रतिजगादेति भावः ।

**भाषा**—इस प्रकार देवताओं ने की हुयी सत्य और मनोहर स्
सुन कर अत्यन्त दयालु श्री ब्रह्मदेव जी इन्द्रादि देवताओं के प्रति बोले ।

अथ ब्रह्मणः प्रतिवचने वैशिष्ट्यमाह—

**पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता ।**
**प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ॥ १७ ॥**

गुण द्रव्य जाति विमलक्रिया मय चार शब्द प्रवृत्तियाँ ।
अन्वर्थ हो निकलीं चतुर्मुख से, कलामय वृत्तियाँ ॥

**अन्वयः**—चतुष्टयी शब्दानां प्रवृत्तिः पुराणस्य कवेः तस्य चतुर्मुख
सती चरितार्था आसीत् ॥

**व्याख्या**—चतुष्टयी = चतुर्विधा, शब्दानां=पदानां, प्रवृत्तिः = 
पुराणस्य = पुरातनस्य, कवेः = कवयितुः, तस्य = ब्रह्मणः, चतुर्मुख
चतुराननोच्चरिता सती, चरितार्था=अन्वर्था, आसीत्=अभवत् ॥

**व्युत्पत्तिः**—चतुष्टयी=अवयवचतुष्टययुक्ता "गौः शुक्लश्चलो डि
चतुष्टयी शब्दानां प्रवृत्तिः" इति महाभाष्यकारेणोपपादितम् । चत्वारः
यस्याः सा इति चतुष्टयी, "सङ्ख्याया अवयवे तयप्"इति तयप्प्रत्ययः,
णञ्द्वयसज्०" इत्यादिना ङीप् प्रत्ययः, "ह्रस्वात्तादौ तद्धिते" इति
शब्दानां="शास्त्रे शब्दस्तु वाचकः" इत्यमरः । पुराणस्य=पुरा भवः
पुराशब्दात् "सायञ्चिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युटयुलौ तुट् च ५।२।
ट्युट्युलौ, "पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ४।३।१०५" इति निर्देशात् "
दीनि यथोपदिष्टम्"इति तुडभाव ऊहनीयः। "पुराणे प्रतनप्रत्नपुरातनचि
इत्यमरः । कवेः = "धीरो मनीषि ज्ञः प्राज्ञः सङ्ख्यावान् पण्डितः कवि

रः । चतुर्मुखसमीरिता=चतुर्भिः मुखैः सम्यक्=सकलसंस्कारसमग्रम् , ईरिता =
चारिता चतुर्मुखसमीरिता, "तद्धितार्थोत्तरपदसमाहारे च" इति उत्तरपदस-
ासः ; अन्यथा समाहारे सति चतुर्मुखीति स्यात् "द्विगोः" इत्यनेन ङीप्प्र-
यस्य दुर्वारत्वात् । "वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्" इत्यमरः ।
रितार्था=चरितः अर्थः यस्याः सा चरितार्था, चतुर्मुखोच्चारणात् चातुर्विध्यं
फलमासीदित्यर्थः । शब्दप्रवृत्तिविषये उक्तं च—

"वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा ।
द्योतितार्था च पश्यन्ती सूक्ष्मा वागनपायिनी" इति ॥

अत्र वक्तुः कृतार्थत्वं वाक्प्रवृत्तावुपचर्यते, वाक्प्रवृत्तेरचेतनायाः कृतार्थत्वा-
नुपपत्तेः ।

**भावार्थः**—द्रव्यगुणक्रियाजातिभेदेन परापश्यन्तीमध्यमावैखरीति चतुर्विधा
ब्दानां प्रवृत्तिः पुरातनकवेः ब्रह्मणश्चतुर्भिर्मुखैरुदीरिता सती, अन्वर्थासीदिति भावः

**भाषा**—प्राचीन कवि ब्रह्मदेव जी के चारों मुखसे निकलने वाली, द्रव्य,
ण, क्रिया और जाति के भेद से परा, पश्यन्ती, मध्यमा और।वैखरी नामक
ब्दों की चार प्रकार की प्रवृत्ति चरितार्थ होगयी ।

अथैकादशभिः श्लोकैः ब्रह्मणः प्रतिवचनप्रकारं प्रस्तौति ।
तत्रादौ स्वागतमाह—

**स्वागतं स्वानधीकारान्प्रभावैरवलम्ब्य वः ।**
**युगपद्युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः ! ॥ १८ ॥**

**हे दीर्घबाहु ! अमितपराक्रम ! देव ! स्वागत है तुम्हे ।**
**सामर्थ्य से अधिकार रख, सुर देव स्वागत है तुम्हे ॥**

**अन्वयः**—प्राज्यविक्रमाः ! स्वान् अधीकारान् प्रभावैः अवलम्ब्य युगपत्
प्तेभ्यः युगबाहुभ्यः वः स्वागतम् ॥

**व्याख्या**—प्राज्यविक्रमाः=भूरिपराक्रमाः, हे देवाः ! इति शेषः, स्वान्=
कीयान् , अधीकारान्=नियोगान् , प्रभावैः=सामर्थ्यैः, अवलम्ब्य=आस्थाय,
ापत्=समकालं, प्राप्तेभ्यः=आगतेभ्यः, युगबाहुभ्यः=दीर्घबाहुभ्यः, वः=
ष्मभ्यम् , स्वागतम्=शोभनम् आगमनम् ॥

**व्युत्पत्तिः**—प्राज्यविक्रमाः=प्राज्यः विक्रमः येषां ते प्राज्यविक्रमाः, तत्स-
ोधने हे प्राज्यविक्रमाः ! "प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु" इति, "विक्रम-

स्त्वतिशक्तिता" इत्यप्यमरः। अनया सम्बुध्या तेषां परिभवावकाशो
अधीकारान्="उपसर्गस्य घञ्यमनुष्ये बहुलम्" इति दीर्घः। युगपत्="
कदा" इत्यमरः। युगबाहुभ्यः=युगौ इव बाहू येषां ते युगबाहवः, तेभ्
बाहुभ्यः, "यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु" इति "भुजबाहू प्रवे
इति चाऽमरः। आजानुबाहुत्वं भाग्यलक्षणम्। वः=युष्मच्छब्दस्य च
हुवचने "बहुवचनस्य वस्नसौ" इति वसादेशः। "कर्मणा यमभिप्रैति स
दानम्' इत्यत्र कर्मपदेन क्रियाग्रहणात् सम्प्रदानत्वम्। "चतुर्थी सम्प्रदाने
चतुर्थी। स्वागतं=शोभनम् आगतं स्वागतं, "कुगतिप्रादयः" इति गतिस

अत्र आत्मीयानधिकारानवलम्ब्य पृथगवस्थितानां सम्भूयागमनवचने
सहेतुकं, स च हेतुर्महानिति व्यज्यते।

**भावार्थः**—हे प्रभूतपराक्रमा! देवाः! सामर्थ्यैरात्मीयानधिकार
स्थितानां समकालमागतानामाजानुबाहूनां भवतामागमनकार्यं शोभनं
दिति भावः।

**भाषा**—हे अत्यन्तपराक्रमशालि देवताओं! अपने अपने अधि
अपने अपने सामर्थ्य से धारण करते हुये, एक साथ आये हुये, आप लो
आगमन कार्य शोभन (स्वागत) होवें।

इत्थं सूचितस्यार्थस्य किञ्चिद्विवरणमाह—

**किमिदं द्युतिमात्मीयां न बिभ्रति यथा पुरा।**
**हिमक्लिष्टप्रकाशानि ज्योतींषीव मुखानि वः ॥ १९ ॥**

हिम मन्द कान्ति नक्षत्र सम, क्यों मुख तुम्हारे हो गये।
क्यों छवि नहीं है पूर्व सी, सब तेज क्यो तुम खो गये॥

**अन्वयः**—हे वत्साः! हिमक्लिष्टप्रकाशानि ज्योतींषि इव वः मुखा
यथा आत्मीयां द्युतिं न बिभ्रति, इदं किम्?

**व्याख्या**—हे वत्साः! हे पुत्रकाः! हिमक्लिष्टप्रकाशानि=नी
प्रभाणि, ज्योतींषि इव=नक्षत्राणि इव, वः=युष्माकं, मुखानि=आनना
=पूर्वम्, यथा=इव, आत्मीयां=स्वकीयां, द्युतीं=कान्तिं, न बिभ्र
धारयन्ति, इदं किम्=किं निबन्धनमित्यर्थः, कस्माद्धेतोः इति यावत्।
मित्यनेन वाक्याऽर्थः परामृश्यते।

**व्युत्पत्तिः**—हिमक्लिष्टप्रकाशानि=क्लिष्टः प्रकाशः येषां तानि

काशानि, हिमेन क्लिष्टप्रकाशानि हिमक्लिष्टप्रकाशानि । "प्रकाशो द्योत आतपः" इत्यमरः । ज्योतींषि = "दीप्तिताराहुताशेषु ज्योतिः" इति शाश्वतः । मुखानि = "आननं लपनं मुखम्" इत्यमरः । आत्मीयाम् = आत्मनः इयम् आत्मीया, आत्मीयां "वृद्धिर्यस्याचामादिस्तद्वृद्धम्" इत्यात्मपदस्य वृद्धसंज्ञा, ततः "वृद्धाच्छः" इति छप्रत्ययः, तदनु "आयनेयी०" इत्यादिना तस्य ईयादेशः तिं="शोभा कान्तिर्द्युतिश्छविः" इत्यमरः । बिभ्रति="डुभृञ् धारणपोषणयोः" ति धातोर्लटि रूपम् । अत्रोपमालङ्कारः ।

**भावार्थः**—नीहारेण मन्दप्रभाणि नक्षत्राणीव युष्माकं वदनानि स्वाभाविकीं कान्तिं पूर्ववत् न दधतीदं दृश्यमानं सर्वं किं कारणकमिति भावः ।

**भाषा**—किन्तु ओस के गिरने से नक्षत्र जैसे मन्द कान्ति हो जाते हैं, ऐसे ही आप लोगों के मुख पहिले के ऐसी स्वाभाविक कान्ति को नहीं धारण करते इसका क्या कारण है ।

सामान्यत उक्तमेव विशेषेण प्रपञ्चयति सप्तभिः श्लोकैः ।

तत्रादौ प्राधान्यान्महेन्द्रस्यावस्थामाह—

> **प्रशमादर्चिषामेतदनुद्गीर्णसुरायुधम् ।**
> **वृत्रस्य हन्तुः कुलिशं कुण्ठिताश्रीव लक्ष्यते ॥ २० ॥**
>
> **है तेज बुझने से मनोहर नष्ट शोभा हो गई ।**
> **मालूम होता इन्द्र की, पवि-धार कुण्ठित हो गई ॥**

**अन्वयः**—अर्चिषां प्रशमात् अनुद्गीर्णसुरायुधम् एतत् वृत्रस्य हन्तुः कुलिशं कुण्ठिताश्रि इव लक्ष्यते ।

**व्याख्या**—अर्चिषां=तेजसां, प्रशमात्=निर्वाणात् अनुद्गीर्णसुरायुधम्=अनुदितेन्द्रधनुः, अनुदितचित्रप्रभमित्यर्थः, एतत् , वृत्रस्य=अहेः, वृत्रासुरस्येत्यर्थः, हन्तुः=नाशकस्य, इन्द्रस्येत्यर्थः, कुलिशं=वज्रं, कुण्ठिताश्रि इव=हतशक्तिकोटि इव, लक्ष्यते=दृश्यते ।

**व्युत्पत्तिः**—अर्चिषां="वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्" इत्यमरः । अनुद्गीर्णसुरायुधम्=न उद्गीर्णम् अनुद्गीर्णम्, सुराणाम् आयुधम् सुरायुधम् , "इन्द्रायुधं शक्रधनुः" इत्यमरः । विशेषस्य सामान्येन निर्देशः अनुद्गीर्णं सुरायुधं यस्मात्तद् अनुद्गीर्णसुरायुधं । हन्तुः=हन्तीति हन्ता, तस्य हन्तुः । "हन हिंसागत्योः" इति धातोः तृच्प्रत्ययः । कुलिशं="ह्रादिनी वज्रमस्त्री स्या-

स्कुलिशं भिदुरं पविः" इत्यमरः । कुण्ठिताश्रि=कुण्ठिताः = क्षीणधारा, कोट्यो, यस्य तत्, कुण्ठिताश्रि "स्त्रियः पाल्यश्रिकोटयः" इत्यमरः ।

अत्रार्चिःप्रशमनेन कुण्ठिताश्रित्वमुत्प्रेक्ष्यत इत्युत्प्रेक्षालङ्कारः ।

**भावार्थः**—किरणानां संक्षयात् अनुद्गतनानारत्नच्छायमेतत् दृश्यमानं न्द्रस्य वज्रं कुण्ठितकोटीव दृश्यत इति भावः ।

**भाषा**—किरणों के नष्ट हो जाने से पूर्ववत् रत्नो की कान्ति जिसकी झलकती है, ऐसा दिखायी पड़नेवाला इन्द्र का वज्र, हतश्रि क्यों मालूम हो

अथ वरुणस्यावस्थामाह—

**किं चाऽयमरिदुर्वारः पाणौ पाशः प्रचेतसः ।**
**मन्त्रेण हतवीर्यस्य फणिनो दैन्यमाश्रितः ॥ २१ ॥**

है होगया अरि-प्राणघातक, वरुण आयुध इस तरह ।
हतवीर्य होता मन्त्र से, विकराल पन्नग जिस तरह ॥

**अन्वयः**—किञ्च अयम् अरिदुर्वारः प्रचेतसः पाणौ पाशः मन्त्रेण ह स्य फणिनः दैन्यम् आश्रितः ।

**व्याख्या**—किञ्च = अन्यच्च, अयं—दृश्यमानः, अरिदुर्वारः=वैरिदु प्रचेतसः = वरुणस्य, पाणौ = हस्ते, पाशः = रज्जुः, आयुधविशेष इत्यर्थः वरुणो पाशहस्ताविति प्रसिद्धिः । मन्त्रेण = मनुना, गारुडेन मन्त्रेणेत्यर्थः वीर्यस्य=नष्टपराक्रमस्य, फणिनः=सर्पस्य, दैन्यं=दीनताम् शोच्यत्वमि आश्रितः = प्राप्तः ।

**व्युत्पत्तिः**—अरिदुर्वारः=दुःखेन वारयितुं शक्यः दुर्वारः, कृच्छ्रार्थे अरिभिः दुर्वारः, अरिदुर्वारः "रिपौ वैरिसपत्नाऽरिद्विषद्द्वेषणदुर्हृदः" इत्य प्रचेतसः=प्रकृष्टं चेतः यस्य सः प्रचेताः, तस्य प्रचेतसः, "प्रचेता वरुणः यादसां पतिरप्पतिः" इत्यमरः । मन्त्रेण="मन्त्रा मननात्" इति निरुक्ते हतवीर्यस्य=हतं प्रतिहतं, वीर्यं=प्रभावो यस्य सः हतवीर्यः, तस्य हतवी "वीर्यं बले प्रभावे च" इत्यमरः । फणिनः=फणा अस्ति यस्य सः फणी, फणिनः । "स्फटायां तु फणा द्वयोः" इति "कुण्डली गूढपाच्चक्षुः श्रवाः दरः फणी" इत्यमरः । दैन्यं=दीनस्य भावः कर्म वा दैन्यं, तत्, व्यञ्ज "दौर्गत्यादेरनौजस्यं दैन्यं कार्ष्ण्यामृजादिकृत्" (४, १४०, ) इति दश "अत्र फणिनिष्ठदैन्यस्य पाशेऽसम्भवाद् दैन्यमिव दैन्य मति कल्पनात् अ

स्तुसम्बन्धो निदर्शनाऽलङ्कारः ।" तल्लक्षणं यथा—साहित्यदर्पणे =

"सम्भवन्वस्तुसम्बन्धोऽसम्भवन्वापि कुत्रचित् ।
यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना" इति ॥

भावार्थः—अपि चायं दृश्यमानो रिपुदुष्प्रधर्षो वरुणस्य हस्ते वर्तमानः
शः, गारुडेन प्रतिबद्धशक्तेः सर्पस्य दीनतां प्राप्तः इति भावः ।

भाषा—और श्री वरुण देव के हाथ में शत्रुओं का नाश करने वाला यह
श शस्त्र, गरुड़ से पराजित सर्प के समान, दीन क्यों मालूम होता है ।

अथ कुबेरस्यावस्थामाह—

**कुबेरस्य मनः शल्यं शंसतीव पराभवम् ।**
**अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः ॥ २२ ॥**

**होकर कुबेर, रहित गदा से, इस तरह होता मलिन ।**
**है वृक्ष, डाली टूटने से, जिस तरह होता मलिन ॥**

अन्वयः—अपविद्धगदः भग्नशाखः द्रुमः इव स्थितः कुबेरस्य बाहुः मनः
ल्यं पराभवं शंसति इव ।

व्याख्या—अपविद्धगदः = त्यक्तगदः, अत एव भग्नशाखः = छिन्नलतः,
मः इव=वृक्षः इव, स्थितः, कुबेरस्य=यक्षराजस्य बाहुः, भुजः, मनःशल्यं =
क्तशल्यप्रायम् , पराभवं=पराजयं, शत्रुकृतमिति शेषः, शंसति इव = कथयति
व, लक्षणया अनुमापयतीत्यर्थः । बाहौ मुख्यकथनस्याऽसम्भवादिवशब्दः ।

व्युत्पत्तिः—अपविद्धगदः = अपविद्धा गदा येन सः अपविद्धगदः । भग्न-
ाखः=भग्ना शाखा यस्य सः भग्नशाखः "समे शाखालते" इत्यमरः । द्रुमः =
:=शाखा, अस्ति यस्य सः द्रुमः "द्युद्रुभ्यां मः" इति मप्रत्ययः, "अनोकहः कुटः
ालः पलाशी द्रुद्रुमागमाः" इत्यमरः । कुबेरस्य=कुत्सितं वेरम् अस्य सः कुबेरः,
स्य कुबेरस्य । शरीरस्य कुत्सितत्वं च तस्य कुष्ठित्वात् ज्ञेयम् । "कुबेरस्त्र्यम्बक-
खो यक्षराड् गुह्यकेश्वरः" इत्यमरः । मनःशल्यं = मनसः शल्यं मनः शल्यं,
त् । "चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इति कोषः ।

"अत्र पराभवं शंसतीवेत्युत्प्रेक्षा, द्रुम इवेत्युपमा, मनःशल्यमिति रूपकम्"
था चोत्प्रेक्षोपमारूपकाणां संसृष्टिः ।

भावार्थः—परित्यक्तगदायुधोऽत एव छिन्नशाखो वृक्ष इव, वैश्रवणस्य
स्तो, मनसः शल्यवदत्यन्तदुःसहं शत्रुपरिभवं कथयतीवेति भावः ।

भाषा—शाखा के कटजाने से वृक्ष की तरह, गदा शस्त्र से रहित हारेऽ
का यह बाहु, मानसिक शल्यके समान, अत्यन्त दुस्सह शत्रुजन्य परा
मानों प्रकट करता है।

अथ यमस्यावस्थामाह—

यमोऽपि विलिखन्भूमिं दण्डेनास्तमितत्विषा ।
कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम् ॥ २३ ॥

यम राज दण्ड लिये हुए खोदता उससे मही ।
उल्मुक जला, फिर बुझ गया हो, ज्ञात होता है यही ॥

अन्वयः—अस्तमितत्विषा दण्डेन यमः अपि भूमिं विलिखन् अमो
अस्मिन् निर्वाणाऽलातलाघवं कुरुते ।

व्याख्या—अस्तमितत्विषा=नष्टतेजसा, दण्डेन=लगुडेन, आयुधवि
त्यर्थः, यमः अपि=कृतान्तः अपि, भूमिं=भुवं, विलिखन्=घर्षयन्,
अपि=अनिष्फले अपि, सफलेऽपीत्यर्थः, अस्मिन्=दण्डे, निर्वाणालात
शान्तोल्मुकाऽऽनादरं, कुरुते=करोति ।

व्युत्पत्तिः—अस्तमितत्विषा='अस्तम्' इति मान्तमव्ययम् । अस्त
अस्तमिता, "द्वितीया श्रिताऽतीतपतितगताऽत्यस्तप्राप्तापन्नैः" इति स
अस्तमिताः त्विषः यस्य सः अस्तमितत्विट्, तेन अस्तमितत्विषा । "
भारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः" इत्यमरः । दण्डेन="दण्डोऽ
डेऽपि स्यात्" इत्यमरः । यमः=यमयति=नियमयत्यसत इति यमः ।
"भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा" इत्यमरः । विलिखन्=
तीति विलिखन्, शतृप्रत्ययः । विषादवन्तो हि दण्डादिना भूमिविलेखनं कु
ति विषादस्यानुभावोऽयम् । अमोघे=मोघो निष्फलो न भवतीत्यमोघः,
अमोघे । निर्वाणाऽलातलाघवं=निर्वाणं=शान्तं च तत् अलातमुल्मुकं नि
लातम् । "निर्वाणोऽवाते" इति निपातनात् निष्ठायां नत्वम् । "अलात
ज्ञेयम्" इति हलायुधः । लघोर्भावः लाघवम् । निर्वाणाऽलातस्य लाघवं
णालातलाघवं, तत् ।

'अत्राऽपि लाघवमिव लाघवमिति कल्पनान्निदर्शनालङ्कारः । तल्ल
प्रागेवोक्तम् ।

भावार्थः—निस्तेजस्केन दण्डायुधेनान्तकोऽपि पृथ्वीं विदारयन् पुरा

हारेऽप्यस्मिन् दण्डे शान्तोल्मुकक्लैव्यं करोतीति भावः ।

भाषा—यमराज भी निस्तेज दण्ड से पृथिवी को खोदते हुहे अपाने असह्य एड की निष्फलताको प्रगट करते हैं ।

अथ द्वादशादित्यानामवस्थामाह—

**अमी च कथमादित्याः प्रतापक्षतिशीतलाः ।**
**चित्रन्यस्ता इव गताः प्रकामालोकनीयताम् ॥ २४ ॥**

**क्षय तेज होने से दिवाकर चित्र-लिखित समान हैं ।**
**अवलोकने पर नयन को करते न पीडा-दान हैं ॥**

**अन्वयः**—प्रतापक्षतिशीतलाः अमी आदित्याश्च कथं चित्रन्यस्ताः इव प्रकामालोकनीयतां गताः ।

**व्याख्या**—प्रतापक्षतिशीतलाः=तेजःक्षयशीताः, अमी=एते, आदित्याश्च=द्वादशसूर्याश्च, कथं=केन हेतुना, चित्रन्यस्ताः इव=आलेख्यलिखिताः इव, प्रकामालोकनीयताम्=अत्यन्तदृश्यतां, गताः=प्राप्ताः ।

**व्युत्पत्तिः**—प्रतापक्षतिशीतलाः=प्रकृष्टस्तापः प्रतापः, "कुगतिप्रादयः" इति प्रादिसमासः । "प्रतापस्तापतेजसोः" इति विश्वः । प्रतापस्य क्षतिः प्रतापक्षतिः, तया [ हेतुना ] शीतलाः प्रतापक्षतिशीतलाः । "तुषारः शीतलः शीतो हिमः सप्ताऽन्यलिङ्गकाः" इत्यमरः । आदित्याः=अदितेरपत्यानि पुमांसः आदित्याः, अदितिशब्दात् "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ४।१।८५" इति ण्यः प्रत्ययः, ततः "यस्येति च" इति इकारलोपः "तद्धितेष्वचामादेः" इत्यादिवृद्धिश्च । "सूरसूर्याऽर्यमादित्यद्वादशात्मदिवाकराः" इत्यमरः । बहुवचनत्वात् द्वादशादित्या इत्यर्थः । चित्रन्यस्ताः=चित्रे न्यस्ताः चित्रन्यस्ताः, "आलेख्याश्चर्ययोश्चित्रम्" इत्यमरः । प्रकामालोकनीयताम्=आलोकितुं योग्यः आलोकनीयः, आङुपसर्गपूर्वकात् "लोकृ दर्शने" इति धातोरर्हार्थे "तव्यत्तव्याऽनीयरः" इति अनीयर् प्रत्ययः । आलोकनीयस्य भावः आलोकनीयता, "तस्य भावस्त्वतलौ" इति तल्प्रत्ययः; "तलन्तं स्त्रियाम्" इत्यनुशासनात्तदन्तस्य स्त्रीत्वम् । प्रकामं=यथेच्छं यथा स्यात्तथा, आलोकनीयता, प्रकामालोकनीयता, तां प्रकामालोकनीयतां, "सुप्सुपा" इति समासः । अत्रोत्प्रेक्षालङ्कारः ।

**भावार्थः**—तेजसां क्षयेण शीताः अमी पुरोवर्तिनो द्वादशादित्याः, केन हेतुना चित्रलिखिता इवात्यन्तं दृश्यतां प्राप्ता इति भावः ।

**भाषा**—तेज के नाश से ठण्डे पड़े हुये ये बारह आदित्य भी चित्र की तरह अत्यन्त दृश्य होकर आंखों को पूर्ववत् चकचौध क्यों कर नहीं क

अथाष्टानां वायूनामवस्थामाह—

**पर्याकुलत्वान्मरुतां वेगभङ्गोऽनुमीयते ।**
**अम्भसामोघसंरोधः प्रतीपगमनादिव ॥ २५ ॥**

**जल तरल के अवरोध से होती सलिल की जो दशा ।**
**गति भङ्ग होने से वही होती पवन की दुर्दशा ॥**

**अन्वयः**—मरुतां पर्याकुलत्वात् वेगभङ्गः, अम्भसां प्रतीपगमनात् संरोधः इव अनुमीयते ।

**व्याख्या**—मरुतां=वायूनाम् । अष्टानां, मतान्तरेण ४९ सप्तसप्तानां वा । पर्याकुलत्वात् = स्खलितगतित्वात् हेतोः, वेगभङ्गः = जवाऽवरोधः, सां = जलानां, प्रतीपगमनात्=विपरीतगमनात् उत्तानाऽवरोहादित्यर्थः, रोधः इव = प्रवाहप्रतिबन्धः, इव, अनुमीयते = तर्क्यते ।

**व्युत्पत्तिः**—मरुतां="समीरमारुतमरुज्जगत्प्राणसमीरणाः" इत्यमरः ते चाष्टौ भवन्ति, तथा च स्मृतिः—

"गगनः स्पर्शनो वायुरनिलो मारुतस्तथा ।
प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्तिताः ॥ इति

पर्याकुलत्वात्=पर्याकुलानां भावः पर्याकुलत्वं, तस्मात् पर्याकुलत्वात् अयथापूर्वसञ्चारात् । "विभाषा गुणेऽस्त्रियाम्" इति हेतौ पञ्चमी । पर्या ब्दात् "तस्य भावस्त्वतलौ" इति त्वः प्रत्ययः, "त्वान्तं क्लीबम्" इत्यनुशा तदन्तस्य नपुंसकत्वम् । वेगभङ्गः = वेगस्य भङ्गः, वेगभङ्गः । अम्भसां "अम्भोर्णस्तोयपानीयनीरक्षीराऽम्बुशम्बरम्" इत्यमरः । प्रतीपगमनात्= च तत् गमनं प्रतीपगमनं, तस्मात् प्रतीपगमनात् । ओघसंरोधः=ओघस्य ओघसंरोधः । अत्रोपमालङ्कारः ।

**भावार्थः**—वायूनां स्खलितगतित्वाद्धेतोर्वेगनाशः जलानामुत्तानाव प्रवाहप्रतिबन्ध इव सुखानुमेयो भवतीति भावः ।

**भाषा**—उच्च प्रदेश के अवरोध से जल के प्रवाह की रुकावट की तरह स्खलित होने से, वायु देव के वेग का, नाश साफ २ जाहिर होता है ।

थैकादशानां रुद्राणामवस्थामाह—

**आवर्जितजटामौलिविलम्बिशशिकोटयः ।**
**रुद्राणामपि मूर्धानः क्षतहुङ्कारशंसिनः ॥ २६ ॥**

**अवनत पराजय से जटा में शशि कला मय मृदु बना ।**
**हुङ्कार बल से हीन हूं हर रुद्र देता सूचना ॥**

**अन्वयः**—आवर्जितजटामौलिविलम्बिशशिकोटयः रुद्राणाम् अपि मूर्धानः तहुङ्कारशंसिनः ।

**व्याख्या**—आवर्जितजटामौलिविलम्बिशशिकोटयः=स्रस्तजटाजूटाऽवलम्ब- ानचन्द्ररेखाः, रुद्राणाम् अपि = एकादशरुद्राणाम् अपि, मूर्धानः = मस्तकाः, तहुङ्कारशंसिनः=नष्टाऽहङ्कारसूचकाः, सन्तीति शेषः, हुङ्कारशस्त्रा हि रुद्रा इति राणप्रसिद्धिः ।

**व्युत्पत्तिः**—आवर्जितजटामौलिविलम्बिशशिकोटयः=जटानां मौलयः जटा- ौलयः, आवर्जिताश्च ते जटामौलयः, तेषु विलम्बन्ते इति आवर्जितजटा- ौलिविलम्बिन्यः, णिनि प्रत्ययः । शशः अस्याऽस्तीति शशी, "द्विजराजः शश- रो नक्षत्रेशः क्षपाकरः" इत्यमरः । शशिनः कोटयः शशिकोटयः । आवर्जित टामौलिविलम्बिन्यः शशिकोटयः येषां ते, आवर्जितजटामौलिविलम्बिशशिको- यः । नम्रशिरस्त्वं विषादस्याऽनुभावः । रुद्राणाम्="व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः" इत्यमरः । मूर्धानः=उत्तमाङ्गं, शिरः=शीर्षं, मूर्धा ना मस्त कोऽस्त्रियाम्" इत्यमरः । क्षतहुङ्कारशंसिनः=क्षतश्चाऽसौ हुङ्कारः क्षतहुङ्कारः, तं संसन्तीति क्षतहुङ्कारशंसिनः ।

अत्र शिरोनमने शिरोऽलङ्कारस्यापि नमनं स्वभावसिद्धमिति स्वभावोक्तिरलङ्कारः।

**भावार्थः**—पराभवदुःखावनम्रेषु जटाजूटेषु विलम्बिचन्द्रकलानि रुद्राणां शिरांसि भग्नहुङ्कारशंसीनि सन्तीति भावः ।

**भाषा**—पराजय के दुःख से अवनत जटाजूटों में लटकने वाली चन्द्रकलाओं से युक्त एकादश रुद्रों के मस्तक भी स्वकीय हुङ्कार शक्ति का नाश होनेकी सूचना करते हैं ।

इत्थं प्रतिपादितानां मुखवैवर्ण्यादीनां कारणमपि स्वयमेवाह—

**लब्धप्रतिष्ठाः प्रथमं यूयं किं बलवत्तरैः ।**
**अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥ २७ ॥**

पहले प्रतिष्ठित शत्रु से थे अब हुए इतने मलिन ।
अपवाद से उत्सर्ग शास्त्रों के सदृश क्या हो मलिन ॥

**अन्वयः**—प्रथमं लब्धप्रतिष्ठाः यूयं बलवत्तरैः परैः, उत्सर्गाः अपवादै
किं कृतव्यावृत्तयः भवथ ॥

**व्याख्या**—प्रथमं=पूर्वम्, लब्धप्रतिष्ठाः=प्राप्तस्थितयः, प्राप्ताऽवकाशा
न्यत्र, यूयं=देवाः, बलवत्तरैः=बलीयोभिः पौरुषाऽधिक्यादित्यर्थः, निरव
स्यन्यत्र, परैः=शत्रुभिः, उत्सर्गाः=सामान्यशास्त्राणि 'मा हिंस्यात्सर्वा भूतानि
वमादीनीत्यर्थः, अपवादैः इव=विशेषशास्त्रैः इव "अग्नीषोमीयं पशुमा
इत्येवमादिभिरित्यर्थः, किं, कृतव्यावृत्तयः=विहितप्रतिष्ठाभङ्गाः, "कृतविष
चरूपबाधाः इत्यन्यत्र, भवथ=स्थ इति शेषः । अत्र काक्वा भवथैवेत्यर्थः

**व्युत्पत्तिः**—लब्धप्रतिष्ठाः = लब्धा प्रतिष्ठा यैस्ते लब्धप्रतिष्ठाः, बल
प्रशस्तं बलं येषां ते बलवन्तः, "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुप्
अतिशयेन बलवन्तः बलवत्तराः तैः बलवत्तरैः, "द्विवचनविभज्योपपदे त
सुनौ" इति तरप् प्रत्ययः । अपवादशास्त्राणां बलवत्तरत्वं तु "सावकाशनि
शयोर्निरवकाशो विधिर्बलीयान्"इति न्यायेन सिद्धम् । परैः="अभिघातिप
तिप्रत्यर्थिपरिपन्थिनः" इत्यमरः । उत्सर्गाः="सावकाशत्वमुत्सर्गत्वम्"
वैयाकरणसिद्धान्तः। "कर्मण्यण्" इत्यादयः। अपवादैः=अपोद्यन्ते इति अप
तैः अपवादैः, "निरवकाशत्वमपवादत्वम्" इति च वैयाकरणसिद्धान्तः। "
ऽनुपसर्गे कः" इत्यादिभिः । कृतव्यावृत्तयः=कृता व्यावृत्तिर्येषां ते कृतव्या

"विषयसङ्कोच एव बाधः" इत्याचार्याः । निषेधशास्त्रस्य "मा हिंस्य
भूतानि" इत्यस्य वैदिकहिंसापरिहारेण लौकिकमात्रे व्यवस्थापनात् विषयस
"सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्" इति न्यायेन सर्वत्र शास्त्र
प्रवर्तते इति चिरञ्जीवभट्टाचार्यः । अत्रोपमालङ्कारः ।

**भावार्थः**—लब्धावकाशानि सामान्यशास्त्राणि निरवकाशैर्विशेषशास्त्रै
विषयसङ्कोचानीव, पूर्वं प्राप्तस्थितयो भवन्तः पौरुषातिरेकात् प्रबलतरैः
कृतप्रतिष्ठाभङ्गाः सञ्जाताः किमिति भावः ।

**भाषा**—निरवकाश अपवादशास्त्रों से सावकाश उत्सर्ग शास्त्र की तर
लोक किसी जबरदस्त शत्रु से बाधित होकर स्वाधिकार प्रतिष्ठा को खो चुके

अथ तस्मिन् विषये स्वकर्तव्यांशं पृच्छन् स्ववचनमुपसंहरति—

**तद् ब्रूत वत्साः ! किमितः प्रार्थयध्वं समागताः ।**
**मयी सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता ॥ २८ ॥**

एकत्र हो हे वत्स ! क्यों तुम प्रार्थना करते अहो ।
जग सृष्टि रक्षा है तुम्हीं से हाल सब बोलो कहो ॥

**अन्वयः**—तत् वत्साः ! समागताः यूयम् इतः किं प्रार्थयध्वम् ? । ब्रूत । हि मयि लोकानां सृष्टिः, रक्षा युष्मासु अवस्थिता ॥

**व्याख्या**—तत् = तस्मात् कारणात् , हे वत्साः=हे पुत्रकाः, समागताः= सम्भूय आगताः, यूयम् , इतः=अस्मात् मत्त इत्यर्थः, किं प्रार्थयध्वं=किम् इच्छत, ब्रूत=व्यक्तं कथयत । हि=यस्मात् कारणात् , मयि, लोकानां=भुवनानां, सृष्टिः= सर्जनम् , अवस्थिता, रक्षा=रक्षणं, "तु" युष्मासु=भवत्सु, अवस्थिता=नियता ॥

**व्युत्पत्तिः**—वत्साः = "वत्सस्त्वर्भकपुत्राद्योर्वर्षे वत्सं तु वक्षसि" इति विश्वः । स्वयं पितामहत्वाद्वत्साः इति आमन्त्रयते । समागताः = सम्भूय आगताः समागताः । इतः=अस्मात् इति इतः, पञ्चम्यर्थे तसिः । ब्रूत = "ब्रूञ् व्यक्तायां वाचि" इति धातोः लोट् । लोकानां = "लोकस्तु भुवने जने" इत्यमरः । सृष्टिः= "सृज विसर्गे" इति धातोः "स्त्रियां क्तिन्" इति क्तिन् प्रत्ययः ।

**भावार्थः**—तस्मात् कारणात् हे पुत्रका ! सम्भूयागता यूयं मत्सकाशाद् यदपेक्षितं, तत् त्वरितं वदत, नात्र शङ्का कर्तव्या, यतो रजोगुणमवलम्ब्यावस्थिते मयि लोकानां सृष्टिरवस्थिता, रक्षा तु लोकपालनकार्याधिकृतेषु युष्मास्वेवास्थितेति भावः ।

**भाषा**—इस लिये हे देवगण ! एक साथ मिलकर आये हुये आपलोग हमसे जो चाहते होवें, उसको जल्दी कहिये, किसी बात का सङ्कोच न करिये, क्यों कि रजोगुण का अवलम्बन करके लोक की सृष्टि करना मात्र हमारे जिम्मे है, किन्तु लोगों की रक्षा करना तो आपही के ऊपर निर्भर है ।

अथ प्रतिवचनप्रस्तावे बृहस्पतेरेव तद्योग्यत्वान्महेन्द्रस्य तन्नियोगप्रकारमाह—

**ततो मन्दाऽनिलोद्धूतकमलाकरशोभिना ।**
**गुरुं नेत्रसहस्रेण नोदयामास वासवः ॥ २६ ॥**

मृदु पवन कम्पित कमल आकर सम हिला अपने नयन ।
कुछ बोलने को इन्द्र ने गुरु से कहा सविनय नमन ॥

**अन्वयः**-ततः वासवः गुरुं मन्दाऽनिलोद्धूतकमलाकरशोभिना नेत्र
नोदयामास ।

**व्याख्या**—ततः = अनन्तरं ब्रह्मकृतप्रश्नाऽनन्तरमित्यर्थः, वासवः =
गुरुं = बृहस्पतिं, मन्दाऽनिलोद्धूतकमलाकरशोभिना = मन्दवायुकम्पित
द्योतिना, नेत्रसहस्रेण=नयनसहस्रेण, नोदयमास=प्रेरयामास, प्रतिवक्तुमिति

**व्युत्पत्तिः**—वासवः = "वासवो वृत्रहा वृषा" इत्यमरः। गुरुं=गृणाति
देशं ददातीति गुरुः, "बृहस्पतिः सुराचार्यो गीःपतिर्धिषणो गुरुः" इत्यमरः।
ऽनिलोद्धूतकमलाकरशोभिना = मन्दश्चाऽसौ अनिलः मन्दाऽनिलः, "
गन्धवहो गन्धवाहाऽनिलाशुगाः" इत्यमरः । मन्दानिलेन उद्धूतः मन्दा
द्धूतः, कमलानाम् आकारः कमलाकरः, "सहस्रपत्रं कमलं शतपत्रं कुशे
इति "खनिः स्त्रियामाकरः स्यात्"इति चाऽमरः। मन्दाऽनिलोद्धूतश्चाऽसौ
करः मन्दानिलोद्धूतकमलाकरः, स इव शोभते इति मन्दाऽनिलोद्धूतकम
शोभि, तेन मन्दानिलोद्धूतकमलाकरशोभिना । नेत्रसहस्रेण=नेत्राणां सहस्र
सहस्रं, तेन नेत्रसहस्रेण, "लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी"इत्यमरः।
यामास = "णुद प्रेरणे" इति धातोः णिजन्तात् लिट् "णो नः" इति णस्
सहस्रग्रहणम् आस्थाऽतिशयार्थम् । निमेषरहितानामपि प्रयत्नवशात् लोचनं
न विरुध्यते । अत्र नेत्रसहस्ररूपोऽवयवी कमलाकरस्थानीयः । अवयवभूता
त्राणि तु कमलस्थानीयानीति विभागः ।

**भावार्थः**—पितामहप्रश्नानन्तरमिन्द्रः बृहस्पतिं मन्दपवनकम्पितप
श्रीमता सहस्रनयनेन वक्तुं प्रेरयामासेति भावः ।

**भाषा**—इसप्रकार से पितामह का वचन श्रवण कर इन्द्र ने बृहस्
बोलने के लिये अपने सहस्रनेत्रसे इशारा किया ।

अथ बृहस्पतेः प्रतिवचनप्रस्तावमाह—

**स द्विनेत्रं हरेश्चक्षुः सहस्रनयनाऽधिकम् ।**
**वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम् ॥ ३० ॥**

**सहस्राक्ष से भी अधिक लोचन भूत दोही नेत्र मय ।**
**बोले चतुर्मुख से बृहस्पति जोड कर होकर अभय ॥**

**अन्वयः**—हरेः सहस्रनयनाऽधिकं द्विनेत्रं चक्षुः सः वाचस्पतिः प्राञ्
सन् जलजासनम् इदम् उवाच ।

**व्याख्या**—हरेः=इन्द्रस्य, सहस्रनयनाऽधिकं=सहस्रलोचनातिरिक्तं सहस्रनयनाग्राह्यग्राहकत्वादित्यर्थः, द्विनेत्रं=द्विलोचनं, धर्मार्थदृष्टिमित्यर्थः, चक्षुः=चक्षुर्भूतः, सः, वाचस्पतिः=बृहस्पतिः, प्राञ्जलिः=बद्धाऽञ्जलिः सन्, जलजासनम्=कमलासनम्, ब्रह्माणमित्यर्थः, इदं=वक्ष्यमाणम्, उवाच=अवोचत् ।

**व्युत्पत्तिः**—हरेः="इन्द्रो दुश्च्यवनो हरिः" इति हलायुधः । सहस्रनयनाऽधिकं=सहस्रात् नयनेभ्यः अधिकं सहस्रनयनाधिकं, "तद्धितार्थोत्तरपदसमाहारे च" इति समासः । द्विनेत्रम्=धर्मदृष्टिरर्थदृष्टिश्चेति द्वे नेत्रे यस्य तद् द्विनेत्रम्, अनेन भगवतो बृहस्पतेर्भगवतः शुक्राद् व्यतिरेको ध्वनितः । स हि बलियज्ञे विरोधमाचरन् भगवता विष्णुना धर्मदृष्ट्या विफलीकृतः । असौ तु दृष्टिद्वययोगात् धर्मार्थावुभावपि समीक्ष्योक्तवानित्यर्थः । वाचस्पतिः=वाचः पतिः वाचस्पतिः "कस्कादिषु च ८।३।४" इत्यत्र पठितत्वात् अलुक्सत्वे । "षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु" ८।३।५३ इति सत्वमिति स्वामी, तत्र सत्वविधानात् । षष्ठ्या अलुक् इति भानुजीदीक्षितः, तन्न, उक्तसूत्रस्य छन्दसि विधानात् । "जीव आङ्गिरसो वाचस्पति" इत्यमरः । जलजासनं=जले जातं जलजे, "सप्तम्यां जनेर्डः" इति जलोपपदपूर्वकात् "जनी प्रादुर्भावे" इति धातोर्डप्रत्ययः । जलजम् आसनं यस्य सः जलजासनः, तं जलजासनम् । उवाच="ब्रूञ् व्यक्तायां वाचि" इति धातोः द्विकर्मकत्वात् "जलजासनम्" "इदं" च कर्मद्वयम् ।

बृहस्पतौ चक्षुष्ट्वारोपस्य प्रकृतोपयोगात् परिणामाऽलङ्कारः । तल्लक्षणं यथा—

"विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि ।
परिणामो भवेत्तुल्याऽतुल्याधिकरणो द्विधा ॥" इति साहित्यदर्पणम् ॥

**भावार्थः**—महेन्द्रस्य सहस्रनयनेभ्यो विशिष्टो द्विनेत्रात्मकश्चक्षुर्भूतः स बृहस्पतिरञ्जलिं बध्वा ब्रह्माणमिदं वक्ष्यमाणं जगादेति भावः ।

**भाषा**—महेन्द्रके सहस्रनयन के अपेक्षया विशेष दर्शन शक्ति रखने वाले द्विनेत्रात्मक चक्षुरूप बृहस्पति हाथ जोड़ कर ब्रह्माजी से आगे की बात बोले ।

अथ वचनप्रकारमाह—

**एवं यदात्थ भगवन् ! आमृष्टं नः परैः पदम् ।**
**प्रत्येकं विनियुक्तात्मा, कथं न ज्ञास्यसि प्रभो ॥ ३१ ॥**

**भगवन् ! न उससे अधिक कुछ है आप जो हैं जानते ।**
**प्रभु आप अन्तर्निष्ठ सर्वज्ञ विज्ञ बखानते ॥**

**अन्वयः**—भगवन् ! यत् आत्थ तत् एवम् । नः पदं परैः आमृष्टम् ।
प्रत्येकं विनियुक्तात्मा त्वं कथं न ज्ञास्यसि ?

**व्याख्या**—हे भगवन् ! = हे षड्गुणैश्वर्यसम्पन्न !, यत् आत्थ = '
व्यावृत्तयः परैः २।२७" इति यद् ब्रवीषि, तत् एवं = सत्यम् । नः = अ
पदम् = अधिकारः, परैः = शत्रुभिः, आमृष्टम् = आर्दितम् । हे प्रभो ! = हे स्वा
प्रत्येकं = प्रतिपुरुषं, विनियुक्तात्मा = अवस्थापितस्वरूपः, त्वं, कथं = केन प्र
न ज्ञास्यसि = न वेत्सि ।

**व्युत्पत्तिः**—भगवन् = भगम् अस्ति यस्य स भगवान्, तत्सम्बुद्धौ हे
वन् । प्राशस्त्ये मतुप्प्रत्ययः । "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
वैराग्ययोश्चैव षण्णां भग इतीरितः" इति विष्णुपुराणम् । "भगं श्रीकाम
त्म्यवीर्ययत्नाऽर्ककीर्तिषु" इत्यमरः । आत्थ = ब्रूञ्धातोः "ब्रुवः पञ्चाना
आहो ब्रुवः" इति सिपस्थलादेशो ब्रुवश्चाहादेशः । "वर्तमानसामीप्ये वर्तमान
इति वर्तमानप्रयोगः । वामनस्तु भ्रान्तोऽयं प्रयोग इत्याह । "आहेति भूते
न्तभ्रमवदिति" । आहेत्युपलक्षणम् । 'तद्ग्रहणे सति तदितरग्रहणम्' उ
णम् । नः = अस्मच्छब्दस्य षष्ठीबहुवचने "बहुवचनस्य वस्नसौ" इति नसा
परैः = "अभिघातिपराऽरातिप्रत्यर्थिपरिपन्थिनः" इत्यमरः । प्रभो = "प्रभुः
वृढोऽधिपः" इत्यमरः । प्रत्येकम् = एकम् एकं प्रत्येकम् । विनियुक्तात्मा =
युक्तः आत्मा येन सः विनियुक्तात्मा, सर्वान्तर्यामी इत्यर्थः । न ज्ञास्यसि =
ह्नवे ज्ञः" "अकर्मकाच्च" इत्यात्मनेपदविकल्पः । वर्तमानेऽपि वचनभङ्ग्या
ष्यन्निर्देशः प्रसिद्धः ।

**भावार्थः**—हे ब्रह्मन् ! त्वं यद् ब्रवीषि, तत्सत्यम्, अस्माकमैन्द्रादि
शत्रुभिराक्रान्तम्, हे परमेश्वर ! सर्वजनान्तर्यामितया विश्वव्यापी भवान्
न लोकवृत्तान्तं जानातीति भावः ।

**भाषा**—हे ब्रह्मन् ! आप जो कहते हैं, वह सत्य है, हम लोगों के इ
नादिस्थानों को शत्रुओं ने आक्रमण कर लिया है । सर्वान्तर्यामी विश्व
आप किस लौकिक वृत्तान्त को नहीं जानते हैं ।

अथ तमेव स्वाधिकारोपप्लवं विस्तरतः प्रदर्शयिष्यन्, उपप्लवहेतुभूत
कासुरमेव निर्दिशति—

**भवल्लब्धवरोदीर्णस्तारकाख्यो महासुरः ।**

उपप्लवाय लोकानां, धूमकेतुरिवोत्थितः ॥ ३२ ॥

वर आप से ले तारकासुर बन असुर-नेता महा ।
वह धूम्रकेतु समान जग को त्रास है देता महा ॥

**अन्वयः**—हे भगवन् ! भवल्लब्धवरोदीर्णः तारकाख्यः महासुरः धूमकेतुः लोकानाम् उपप्लवाय उत्थितः ।

**व्याख्या**—हे भगवन् ! भवल्लब्धवरोदीर्णः=त्वत्प्राप्तवरोद्धतः, तारकाख्यः=कनामधेयः, महासुरः=महादानवः, धूमकेतुः इव=उत्पातविशेष इव, लोका=जगतीनाम्, उपप्लवाय = उपद्रवाय, उत्थितः=उत्पन्नः, अस्तीति शेषः ।

**व्युत्पत्तिः**—भवल्लब्धवरोदीर्णः = भातीति भवान्, "भा दीप्तौ" इति ोः डवतुप्रत्ययः । डित्वसामर्थ्यात् अभस्याऽपि टेर्लोपः । भवतः लब्धः भवब्धः । "डुलभष् प्राप्तौ" इति धातोः निष्ठायां क्तप्रत्ययः । "आदिर्ञिटुडवः" डोरित्संज्ञा, "तस्य लोपः" इति तस्य लोपः । "झषस्तथोर्धोऽधः" इति तकारधकारः । भवल्लब्धश्चाऽसौ वरः भवल्लब्धवरः, "देवाद् वृते वरः श्रेष्ठे त्रिषु वं मनाक्प्रिये" इत्यमरः । भवल्लब्धवरेण उदीर्णः भवल्लब्धवरोदीर्णः, तारख्यः=तारकः आख्या यस्य स तारकाख्यः । "आख्याऽऽह्वे अभिधानं च नाम च नाम च" इत्यमरः । महासुरः = मह्यते इति महान् । न सुरः असुरः । विरोधार्थे नञ् । "असुरा दैत्यदैतेयदनुजेन्द्राऽरिदानवाः" इत्यमरः । महान् रः महासुरः ; "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इति तत्पुरुषः । "आतः—६-३-४६-"इत्यादिनात्वम् । लोकानां = "त्रिष्वथो जगती लोको पं भुवनं जगत्" इत्यमरः । धूमकेतुः =धूमाकारः केतुर्धूमकेतुः, "अग्न्युधूमकेतू" इत्यमरः । शास्त्रे धूमकेतोरुदयस्यात्यन्तिकविनाशहेतुत्वम् । तथा हि गार्ग्यसंहितायाम्—

> "उत्तिष्ठति यदा भीमो धूमकेतुर्नभस्तले ।
> तदा विनश्यति क्षिप्रं जगदेतच्चराचरम् ॥" इति ।

ोपमालङ्कारः ।

**भावार्थः**—भवत्सकाशादेव वरं प्राप्योद्धतः तारकासुरः चतुर्दशभुवनानां य धूमकेतुरिवोत्पन्नोऽस्तीति भावः ।

**भाषा**—हे प्रभो ! आप ही से वरदान पाकर उद्धत् भया हुवा तारकासुर नामक चौदह भुवनों का नाश करने के लिये धूमकेतु नक्षत्र के समान उत्पन्न हुआ है ।

अथ विषयीभूतेषु तद्विषयेषूपायान्तरेषु स्वशक्त्यनुरूपां समाश्रयवृ-
यति, सप्तभिः श्लोकैः । तत्रादौ सूर्यस्यानुवृत्तिमाह—

पुरे तावन्तमेवाऽस्य तनोति रविरातपम् ।
दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते ॥ ३३ ॥

नित भानु उतना ही नगर में धूप फैलाते प्रभो ।
जिससे मनोहर बावली के, कमल खिल जाते प्रभो ॥

अन्वयः—अस्य पुरे रविः तावन्तम् एव आतपं तनोति, याव-
दीर्घिकाकमलोन्मेषः साध्यते ।

व्याख्या—अस्य = तारकाऽसुरस्य, पुरे = नगरे, रविः = सूर्यः, त
एव = तावन्मात्रमेव, आतपम् = द्योतम्, तनोति = विस्तारयति, याव-
यावतैव, दीर्घिकाकमलोन्मेषः = क्रीडावापीपद्मविकासः, साध्यते = निष्प

व्युत्पत्तिः—रविः = "भानुर्हंसः सहस्रांऽशुस्तपनः सविता रवि-
मरः । तावन्तम् = तत् परिमाणम् अस्य तावान्, तं तावन्तं, तच्छब्दा-
देतेभ्यः परिमाणे वतुप् ५।२।३९" इति वतुप्प्रत्ययः । आतपं = "प्रका-
आतपः" इत्यमरः । तनोति = "तनु विस्तारे" इति धातोर्लट्, "तना-
उः" इति उप्रत्ययः । यावन्मात्रेण = यत्परिमाणम् अस्या इति यावती,
त्ययः । यावती मात्रा = मितिः, यस्य स यावन्मात्रः, तेन यावन्मात्रेण,
माणेनेत्यर्थः, "मात्रा परिच्छदे । अल्पे च परिमाणे सा मात्रं कार्त्स्न्येऽवधा-
इत्यमरः । दीर्घिकाकमलोन्मेषः = कमलानाम् उन्मेषः कमलोन्मेषः । दी-
कमलोन्मेषः दीर्घिकाकमलोन्मेषः, "वापी तु दीर्घिका" इत्यमरः ।

भावार्थः—सूर्यस्तारकासुरनगरे यावन्मात्रेण निजातपेन वापीकमल-
भवति, तावन्मात्रमेवातपं करोतीत्यर्थः । कठोरकिरणोऽपि सूर्यस्तद्भी-
मन्दोष्णः सन्नेव प्रकाशत इति भावः ।

भाषा—प्रचण्डकिरण वाला भी सूर्य भय से मन्दोष्ण बनकर तार-
नगर में जितने किरणों से तलाव के कमलों का विकास होता है, उतने ही
का आविर्भाव करता है ।

अथ चन्द्रस्यानुवृत्तिमाह—

सर्वाभिः सर्वदा चन्द्रस्तं कलाभिर्निषेवते ।
नादत्ते केवलां लेखां हरचूडामणीकृताम् ॥ ३४ ॥

है कृष्ण पक्ष तथापि उसको शशि कला से सेवते ।
शिव-शीश-लेखा ग्रहण करते वे न भय से जगपते ॥

**अन्वयः**—चन्द्रः त सर्वदा सर्वाभिः कलाभिः निषेवते, केवलां हरचूडाम-
ीकृतां लेखां न आदत्ते ।

**व्याख्या**—चन्द्रः = हिमांऽशुः, तं=तारकाऽसुरं, सर्वदा=सदा, कृष्णपक्षेऽ-
त्यर्थः, सर्वाभिः=अखिलाभिः, कलाभिः, निषेवते=आश्रवते । केवलाम् = ए-
ाम्, हरचूडामणीकृतां=शिवशिरोमणीकृतां, लेखां=कलां, न आदत्ते=न
ह्णाति ।

**व्युत्पत्तिः**—चन्द्रः–"हिमांऽशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः" इत्यमरः।
र्वदा=सर्वस्मिन् काले सर्वदा, "सर्वैकान्यकिंयत्तदः काले दा ५।३।१५" इति
त्रेण सर्वशब्दाद्दाप्रत्ययः । कलाभिः="कला तु षोडशो भागः" इत्यमरः । हर-
ूडामणीकृतां=हरति पापम् इति हरः, "हृञ् हरणे" इति धातोः पचाद्यच् ।
हरः स्मरहरो भर्गः" इत्यमरः । अचूडामणिः चूडामणिः यथा सम्पद्यते तथा
ता चूडामणीकृता, "कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः" इति च्विप्रत्ययः । "च्वौ
७।४।२६" इति पूर्वपदस्य दीर्घः । हरस्य चूडामणीकृता हरचूडामणीकृता, तां
रचूडामणीकृताम् ।

**भावार्थः**—चन्द्रः कृष्णपक्षेऽपि सकलकलापरिपूर्णः सन् तारकासुरं सेवते,
ेवलां शिवशिरोमणीकृतां कलां न गृह्णातीति भावः ।

**भाषा**—चन्द्रमा कृष्णपक्ष में भी सकल कलाओं से परिपूर्ण होकर तारकासुरकी
ेवा करता है, केवल शङ्कर के शिरोभूषणीभूत एककलामात्र का ग्रहण नहीं करता है

अथ पवनस्यानुवृत्तिमाह—

**व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात् ।**
**न वाति वायुस्तत्पार्श्वे तालवृन्ताऽनिलाऽधिकम् ॥ ३५ ॥**

सुम चौर्य भय से वाटिका में मन्दगति बहता पवन ।
पंखे सदृश उसके निकट मन्थर गमन करता पवन ॥

**अन्वयः**—वायुः कुसुमस्तेयसाध्वसात् उद्याने व्यावृत्तगतिः सन् तत्पार्श्वे
ालवृन्तानिलाधिकं न वाति ।

**व्याख्या**—वायुः=वातः, कुसुमस्तेयसाध्वसात्=पुष्पचौर्यभयात्, उद्याने =
रामे, व्यावृत्तगतिः=निवृत्तगमनः, निवृत्तारामसंचारः सन् इत्यर्थः, तत्पार्श्वे =

तत्समीपे, तारकाऽसुरसन्निधौ इत्यर्थः । तालवृन्ताऽनिलाऽधिकं=व्यजनप
धिकं यथा स्यात्तथा, न वाति=न वहति ।

व्युत्पत्तिः—वायुः=वातीति वायुः, "श्वसनः स्पर्शनो वायुर्मातरिश्वा
गतिः" इत्यमरः । कुसुमस्तेयसाध्वसात्=स्तेनस्य भावः कर्म वा स्तेयं,
शब्दात् "स्तेनाद्यन्नलोपश्च" इति यत्प्रत्ययः नलोपश्च । "चौरैकागारि
स्युतस्करमोषकाः" इति "चौरिका स्तैन्यचौर्ये च स्तेयम्" इति चाऽमरः । प्रसू
मानां स्तेयं कुसुमस्तेयं, "स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्" इत्यमरः
कुसुमस्तेयात् साध्वसं कुसुमस्तेयसाध्वसं, तस्मात् कुसुमस्तेयसाध्वसात् "भी
नां भयहेतुः" इति अपादानसंज्ञा, "अपादाने पञ्चमी" इति पञ्चमी । "भी
साध्वसं भयम्" इत्यमरः । कुसुमस्तेयसाध्वसशब्दात् "विभाषा गुणेऽस्त्रियाम्"
हेतौ पञ्चमी । व्यावृत्तगतिः=व्यावृत्ता गतिर्यस्य स व्यावृत्तगतिः । सापे
गमकत्वात् समासः । तत्पार्श्वे=तस्य पार्श्वं तत्पार्श्वं, तस्मिन् तत्पार्श्वे ।
वृन्ताऽनिलाऽधिकं=तालस्य इव वृन्तम् अस्य तालवृन्तं, "व्यजनं तालवृ
इत्यमरः । तालवृन्तस्य अनिलः तालवृन्ताऽनिलः, "पृषदश्वो गन्धवहो
हाऽनिलाशुगाः" इत्यमरः । तालवृन्ताऽनिलात् अधिकं तालवृन्तानिला
[ यथा स्यात्तथा ] वाति="वा गतिगन्धनयोः" इति धातोर्लट् ।

भावार्थः—पवनः उपवनकुसुमापहारसाहसमाशङ्क्य निवृत्तस्वैरसञ्चा
तारकासुरस्य समीपे व्यजनसञ्चारपवनाद् विशेषं न वातीति भावः ।

भाषा—पवन तारकासुरके बगीचे के पुष्पों का पतन न हो, इस
तारकासुरके समीप पंखे की हवा से अधिक नही बहता ।

अथ षड्ऋतूनामनुवृत्तिमाह—

पर्यायसेवामुत्सृज्य पुष्पसम्भारतत्पराः ।
उद्यानपालसामान्यमृतवस्तमुपासते ॥ ३६ ॥

पर्याय-सेवा छोडकर ऋतु कुसुम संचय कर रहे ।
माली सदृश तारक असुर की सभय सेवा कर रहे ॥

अन्वयः—ऋतवः पर्यायसेवाम् उत्सृज्य पुष्पसम्भारतत्पराः सन्तः
पालसामान्यं तम् उपासते ।

व्याख्या—ऋतवः=वसन्तादयः । षडिति शेषः, पर्यायसेवां=क्रमसे
उत्सृज्य=परित्यज्य, पुष्पसम्भारतत्पराः=कुसुमसंग्रहासक्ताः सन्तः,

लसामान्यम्=आरामपालसाधारणम्, यथा स्यात्तथा, तं=तारकाऽसुरम्, उपा-
ते = सेवन्ते ।

व्युत्पत्तिः—पर्यायसेवां पर्यायेण सेवा पर्यायसेवा, तां पर्यायसेवाम् । उत्सृज्य = उद्उपसर्गपूर्वकात् "सृज विसर्गे" इति धातोः "समानकर्तृकयोः पूर्वकाले" क्त्वाप्रत्ययः, तस्य "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति ल्यबादेशः । पुष्पसम्भारतत्पराः = पुष्पाणां सम्भारः पुष्पसम्भारः, तस्मिन् पराः पुष्पसम्भारतत्पराः, "तत्परे प्रसितासक्तौ" इत्यमरः । उद्यानपालसामान्यम्=उद्यानं पालयन्तीति उद्यानपालाः, तैः सामान्यम् । उद्यानपालसामान्यं यथा स्यात्तथा । "साधारणं तु सामान्यम्" इत्यमरः । समानशब्दात् "चातुर्वर्ण्यादीनां स्वार्थ उपसङ्ख्यानम्" इति वार्तिकेन स्वार्थे ष्यञि कृते सामान्यशब्दसिद्धिः ।

क्रमेण षड् ऋतवो यथा—

"वसन्तश्च तथा ग्रीष्मः प्रावृट् च शरदेव च ।
हेमन्तः शिशिरश्चैव षडेते ऋतवः स्मृताः ॥" इति ।

अत्र पुष्पसम्भारतत्परत्वरूपसाधारणधर्मेणोद्यानपालकानामृतूनाञ्चोपमानोपमेयत्वं, तथा चोपमालङ्कारः ।

**भावार्थः**—शीतोष्णादिकं स्वस्वगुणमपहायोपवनपालकवत् स्वस्वकुसुमसम्पादनमात्रपरा वसन्तादय ऋतवः कुसुमान्तरमविनाशयन्तो युगपदेव तारकासुरमाराधयन्तीति भावः ।

**भाषा**—शिशिरवसन्तादि छहों ऋतु, स्वकीय सर्दी गर्मी आदि धर्मों को छोड़कर, बगीचेके मालियों की तरह, दूसरे पुष्पों का नाश न करते हुये, अपने अपने पुष्पों का उत्पादन कर, एक साथ तारकासुरकी सेवा करते हैं ।

अथ वरुणस्यानुवृत्तिमाह—

**तस्योपायनयोग्यानि रत्नानि सरितां पतिः ।**
**कथमप्यम्भसामन्तरानिष्पत्तेः प्रतीक्षते ॥ ३७ ॥**

सागर उसे उपहार देने के लिये सुन्दर रतन ।
परिपाक तक करता प्रतीक्षा नित उसे करता यतन ॥

**अन्वयः**—सरितां पतिः तस्य उपायनयोग्यानि रत्नानि अम्भसाम् अन्तः निष्पत्तेः कथमपि प्रतीक्षते ।

**व्याख्या**—सरितां = नदीनां, पतिः = स्वामी । समुद्र इत्यर्थः, तस्य = ता-

रकाऽसुरस्य, उपायनयोग्यानि = उपहाराऽर्हाणि, रत्नानि = मणीन्, अम्भ... जलानाम्, अन्तः = मध्ये, आ निष्पत्तेः = परिपाकपर्यन्तं, कथमपि = ... यत्नेन, प्रतीक्षते = प्रतीक्षां करोति ।

व्युत्पत्तिः—सरितां = "अथ नदी सरित्" इत्यमरः । पतिः = "ईश्वरः ... रीशिता" इत्यमरः । उपायनयोग्यानि = उपायनानां योग्यानि उपायनयो... तानि "प्राभृतं तु प्रदेशनम् । उपायनमुपग्राह्यमुपहारस्तथोपदा" इत्यमरः । ... साम् = "अम्भोर्णस्तोयपानीयनीरक्षीराऽम्बु शम्बरम्" इत्यमरः । आ निष्पत्ति नि... अत्र मर्यादायामाङ् विकल्पात् समासाभावः । उपायनयोग्यताप्राप्तिपर्यन्तमि... शुक्तिकायां पतितो जलबिन्दुः षण्मासोत्तरकालमुद्गीर्णो हि प्रशस्तं मौक्तिकं ... लोकप्रसिद्धिः । एवं रत्नान्तरेष्वपि तदुचितकालप्राप्तेरावश्यकत्वात् प्रतीक्षते" ... त्तिः । उपायनयोग्यताप्राप्त्यनन्तरं तु झटिति तस्मै समर्पयत्येवेति ध्वनिः...

भावार्थः—समुद्रः समग्रगुणानामेव रत्नानां तदुपायनयोग्यत्वात् ... प्रदाने दण्डमाशङ्क्य स्वजलान्तर्भागे पच्यमानानां रत्नानां कालवशादेव प... पपत्तेरुपायनयोग्यताप्राप्तिपर्यन्तं तत्सेवायाः कालविलम्बमप्याशङ्कमानो य... श्चित् प्रतीक्षत इति भावः ।

भाषा—समुद्र तारकासुर को नजर देने लायक बहुमूल्य रत्नों की ... भीतर होनेवाली परिपाक अवस्था की प्रतीक्षा करता है ।

अथ भूलोकवासिनां क्षुद्रत्वात् तदनुवृत्तिकथनमतिलङ्घ्य पातालवा... गानामनुवृत्तिमाह—

> ज्वलन्मणिशिखाश्चैनं, वासुकिप्रमुखा निशि ।
> स्थिरप्रदीपतामेत्य भुजङ्गाः पर्युपासते ॥ ३८ ॥
>
> मणि-दीप्त वासुकि आदि पन्नग, असुर-सेवा कर रहे ।
> शुचि अबुझ दीप समान वे, मणि दीप्ति से तम हर रहें ॥

अन्वयः—ज्वलन्मणिशिखाः वासुकिप्रमुखाः भुजङ्गाः च निशि स्थि... ताम् एत्य एनं पर्युपासते ।

व्याख्या—ज्वलन्मणिशिखाः = प्रदीप्यमानमणिज्वालाः, वासुकिप्रमुखाः = वासुक्यादयः, भुजङ्गाः = सर्पाः, च = अपि, निशि = रात्रौ, स्थिरप्रदी... अनिर्वाणदीपत्वम्, एत्य = प्राप्य, एनं = तारकाऽसुरं, पर्युपासते = परिवृत्य ...

व्युत्पत्तिः—ज्वलन्मणिशिखाः = मणीनां शिखाः मणिशिखाः, "वह्नेः...

णीन्, अग्निकीलार्चिर्हेतिः शिखाः स्त्रियाम्" इत्यमरः । ज्वलन्तीति ज्वलन्त्यः । ज्वलन्त्यः कथमपि=णिशिखाः येषां ते ज्वलन्मणिशिखाः । वासुकिप्रमुखाः=वासुकिः प्रमुखं येषां ते सुकिप्रमुखाः, "वासुकिस्तु सर्पराजः" इत्यमरः । भुजङ्गाः="सर्पः पृदाकुर्भुजगो तिः="ईश्वरःजङ्गोऽहिर्भुजङ्गमः" इत्यमरः । च = न केवलं स्वर्गवासिनो वयं, किन्तु पातालवा- उपायनयोग्नो विषकटुका भुजङ्गाश्चेति च शब्दार्थः । निशि=सप्तम्येकवचने निशाशब्द- इत्यमरः । "पद्न्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ६।१।६३" । आ निपाति निशादेशः । "निशा निशीथिनी रात्रि स्त्रियामा क्षणदा क्षपा" इत्यमरः । स्थिर- सिपर्यन्तप्रदीपताम्=प्रकृष्टो दीपः प्रदीपः, "कुगतिप्रादयः" इति गतिसमासः । स्थिरश्चाऽसौ मौक्तिकंप्रदीपः स्थिरप्रदीपः, तस्य भावः स्थिरप्रदीपता, तां स्थिरप्रदीपतां "तस्य भावस्त्व- त्वात् प्रतीतलौ" इति तल्प्रत्ययः । एत्य= 'इण् गतौ' इति धातोः क्त्वा, तस्य ल्यप् । स्थि- त्येवेति ध्वनिवेन तेषां तैलवर्त्यादिनिरपेक्षत्वेन तद्विनाशनिमित्ताभावात् पवनादिभिरनिर्वाप- योग्यत्वात् ीयत्वाच्च प्रदीपान्तरेभ्यो व्यतिरेको ध्वन्यते ।

वशादेव पा **भावार्थः**—रात्रौ वासुकीप्रभृतयो महासर्पाः समुद्धितफणाः सन्तस्तेषु तेषु ङ्कमानो यथदेशेष्ववस्थायाऽनिर्वाणप्रदीपत्वं प्राप्य निजफणामणिभिस्तिमिरमपहरन्तस्तारका- रं सेवन्त इति भावः ।

रत्नों की **भाषा**—रात्रि में वासुकि आदि महासर्प स्वकीय फणाओं को ऊँचाकर प्रत्येक थान में हवा से नहीं बुझनेवाले दीपक बन कर, फणामणियों से अन्धकार को दूर पातालवाि रके तारकासुर की सेवा करते हैं ।

इत्थं त्रैलोक्यवासिनां तारकासुरं प्रति दण्डोपनतानुवृत्तिं प्रतिपाद्य, संप्रति त्रै- लोक्याधिपतेरिन्द्रस्यापि सविशेषानुवृत्तिमाह—

। तत्कृताऽनुग्रहाऽपेक्षी, तं मुहुर्दूतहारितैः ।
॥ अनुकूलयतीन्द्रोऽपि, कल्पद्रुमविभूषणैः ॥ ३९ ॥
रहे । उसके अनुग्रह की अपेक्षा इन्द्र भी करते सदा ।
रहें ॥ चर से विभूषण कल्पतरु के, भेजते रहते सदा ॥
निशि स्थिर

**अन्वयः**—इन्द्रोऽपि तत्कृताऽनुग्रहाऽपेक्षी सन् मुहुः दूतहारितैः कल्पद्रुमवि- , वासुकि भूषणैः तम् अनुकूलयति ।

स्थिरप्रदीप **व्याख्या**—इन्द्रोऽपि = मघवाऽपि, तत्कृताऽनुग्रहाऽपेक्षी = तारकाऽसुरकृत =परिवृत्य प्रसादप्रार्थी सन्, मुहुः=वारं वारं, दूतहारितैः = दूतप्रापितैः, कल्पद्रुमविभूषणैः= ताः, "वहे

कल्पवृक्षाऽलङ्कारैः तत्पुष्पभूतैरित्यर्थः, तं = तारकाऽसुरम्, अनुकूलयति,= अनु-कूलं करोति ।

व्युत्पत्तिः—इन्द्रः="इन्द्रो मरुत्वान्मघवा बिडौजाः पाकशासनः" इत्य, अपि=न केवलं त्रैलोक्यवासिनः, अपि तु त्रैलोक्याधिपतिरिन्द्रोऽपीत्यपिशब्द तत्कृताऽनुग्रहाऽपेक्षी = तेन कृतः तत्कृतः, स चाऽसौ अनुग्रहः तत्कृता तम् अपेक्षते तच्छीलः तत्कृतानुग्रहापेक्षी । "सुप्यजातौ णिनिस्ताच्छील्ये णिनिप्रत्ययः । "सौ च" इति दीर्घः । दूतहारितैः=दूतैः हारितानि दूतहा तैः दूतहारितैः । कल्पद्रुमविभूषणैः=विशिष्टानि भूषणानि विभूषणानि, "कु प्रादयः" इति समासः । कल्पद्रुमाणां विभूषणानि कल्पद्रुमविभूषणानि, तैः मविभूषणैः, अनुकूलयति=अनुकूलं करोति, "तत्करोति तदाचष्टे" इति णि धर्मविजयिनः, लोभविजयिनः, असुरविजयिनश्चेति त्रिविधाः खलु विजि यदाह कौटिल्यः—"धर्मलोभासुरविजयिन इति त्रयोऽभियोक्तारः । तेषा पत्त्या धर्मविजयी तुष्यति, तमभ्यवपद्येत । परेषामपि भयाद् भूमिद्रव्या लोभविजयी तुष्यति; तमर्थेनाभ्यवपद्येत । भूमिद्रव्यपुत्रदारप्राणहरणेनासु तुष्यति; तं भूमिद्रव्याभ्यामुपगृह्याग्राह्यः प्रतिकुर्वीत" ( १२-१-१६२ ) इ

भावार्थः—इन्द्रोऽपि त्रैलोक्याधिपतित्वाभिमानिनमात्मानं प्रति रस्य तारकासुरस्य संश्रयवृत्त्याप्यानुकूल्यकरणमशक्यमिति निश्चिन्वानो बन्धनादिभयात् सान्निध्यं परिहृत्य दूरावस्थित एव तदनुग्रहमाकाङ्क्षमाणः प्र दूतजनप्रापितैः कल्पद्रुमालङ्करणैस्तं तारकासुरमनुवर्तते इति भावः ।

भाषा—इन्द्र भी प्रतिदिन दूतों के द्वारा कल्पवृक्ष के बहुमूल्यरत्नों राना भेजकर अपने साथ शत्रुता रखने वाले तारकासुर को खुश रखने की करता है ।

इत्थमुपवर्णितायाः संश्रयवृत्तेरपि तस्मिन्नसुरविजयिनि तारकासुरे विफलत्वं

> इत्थमाराध्यमानोऽपि, क्लिश्नाति भुवनत्रयम् ।
> शाम्येत्प्रत्यपकारेण, नोपकारेण दुर्जनः ॥ ४० ॥
> तो भी दबाये जगत को रहता अमित दुखभार से ।
> अपकार से हैं शान्त होते खल नहीं उपकारसे ॥

अन्वयः—इत्थम् आराध्यमानोऽपि सः भुवनत्रयं क्लिश्नाति । तथाहि प्रत्यपकारेण शाम्येत्, उपकारेण न शाम्येत ॥

**व्याख्या**—इत्थम्=उक्तप्रकारेण, आराध्यमानोऽपि=सेव्यमानोऽपि रविशशिपवनसमुद्रभुजङ्गपाकशासनैरिति शेषः, सः=तारकाऽसुरः, भुवनत्रयं=लोकत्रयं, क्लीश्नाति=पीडयति। तथाहि दुर्जनः=अनार्यः, प्रत्यपकारेण=प्रतीकारेण शाम्येत्=शान्तो भवेत्, उपकारेण=उपकृत्या, न शाम्येत्।

**व्युत्पत्तिः**—इत्थम्=अनेन प्रकारेण "इदमस्थमुः" इति थमुप्रत्ययः। त्रयं=त्रयः अवयवाः यस्य तत् त्रयं, त्रिशब्दात् "सङ्ख्याया अवयवे तयप्" इति तयप्प्रत्ययः। तस्य "द्वित्रिभ्यां तयस्याऽयज्वा" इति अयजादेशः। भुवनानां त्रयं भुवनत्रयं, तत्। "त्रिष्वथो जगती लोको विष्टपं भुवनं जगत्" इत्यमरः। क्लिश्नाति="क्लिशू विबाधने" इति धातोर्लट्, "क्र्यादिभ्यः श्ना" इति श्नाप्रत्ययः। "शात्" इति श्चुत्वनिषेधः। दुर्जनः=दुष्टो जनः दुर्जनः, "कुगतिप्रादयः" इति समासः। प्रत्यपकारेण=प्रत्यपकरणं प्रत्यपकारः, तेन प्रत्यपकारेण, "अकर्तरि च कारके संज्ञायाम्" इति भावे घञ् प्रत्ययः। शाम्येत्="शमु उपशमे" इति धातोः सम्भावनायां लिङ्। अत्र वैधर्म्येण उत्तरार्धेन पूर्वार्द्धस्य समर्थनात्, अर्थान्तरन्यासोऽलङ्कारः।

**भावार्थः**—उक्तप्रकारेण रविशशिपवनोदधिभुजङ्गसुरेन्द्रैः सततं सेव्यमानोऽपि तारकासुरः त्रैलोक्यं पीडयति, यतो दुर्जनः प्रतीकारेणैव शान्तो भवेत्, उपकारेण तु न शाम्येत्, प्रत्युत कुप्यतीति भावः।

**भाषा**—इस तरह सूर्य, चन्द्र, पवन, समुद्र, सर्प, और इन्द्रों के खुशामत करने पर भी तारकासुर तीनों लोक को कष्ट देता है। ठीक ही हैं दुर्जन प्रतीकार (दण्ड) से ही शान्त होता है, उपकार से शान्त न होकर बलकी और भी उद्दण्ड बन जाता है।

क्लिश्नाति भुवनत्रयमिति यो विग्रह उक्तस्तमेव प्रपञ्चयति, सप्तभिः श्लोकैः। त्र विध्वंसनम्, अपहरणम्, उपरोध इति त्रिविधो विग्रहः। तत्र विध्वंसनमाह—

**तेनाऽमरवधूहस्तैः, सदयालूनपल्लवाः।**
**अभिज्ञाश्छेदपातानां, क्रियन्ते नन्दनद्रुमाः ॥ ४१ ॥**

देवाङ्गना करसे सदय तोड़े गये जिनके सुदल।
नन्दन विपिन के कल्पतरु, वे असुर ने तोड़े सकल॥

**अन्वयः**—तेन अमरवधूहस्तैः सदयालूनपल्लवाः नन्दनद्रुमाः छेदपातानाम् अभिज्ञाः क्रियन्ते।

**व्याख्या**—तेन = तारकाऽसुरेण, अमरवधूहस्तैः—देवाङ्गनाकरैः, लूनपल्लवाः=सकृपच्छिन्नकिसलयाः, नन्दनद्रुमाः=इन्द्रोद्यानवृक्षाः, छेदपातनानाम् = द्वैधीकरणपातनानाम् , अभिज्ञाः = अभिज्ञातारः, क्रियन्ते = विधीयन्ते।

**व्युत्पत्तिः**—अमरवधूहस्तैः = न म्रियन्ते अमराः, तेषां वध्वः अमरवध्वः, तासां हस्ताः अमरवधूहस्ताः, तैः अमरवधूहस्तैः । सुकुमारैरिति भावः। सदयलूनपल्लवाः=दयया सहितं यथा स्यात्तथा सदयं [ क्रि० वि० ], "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः, "वोपसर्जनस्य" इति सहस्य सभावः । "कृपा दयानुकम्पा स्यादनुक्रोशः" इत्यमरः । सदयम् आलूनाः सदयालूनाः । आङ्पूर्वकात् "लूञ् छेदने" इति धातोः क्तप्रत्ययः । सदयालूनाः पल्लवाः येषां ते सदयलूनपल्लवाः "पल्लवोऽस्त्री किसलयम्" इत्यमरः । नन्दनद्रुमाः=नन्दनस्य द्रुमाः नन्दनद्रुमाः, "अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः" इत्यमरः । छेदपातानां = छेदाश्च पाताश्च छेदपाताः, तेषां छेदपातानाम् अभिज्ञाः = अभिजानन्तीति अभिज्ञाः । कृद्योगात् "कर्तृकर्मणोः कृति" इति कर्मणि षष्ठी । क्रियन्ते="डुकृञ् करणे" इति धातोः कर्मणि प्रयोगः यक्च ।

अत्र कार्यभूतेन नन्दनद्रुमछेदपातेन कारणभूतो महेन्द्रपराजयः प्रतीयते। पर्यायोक्त कार्यद्वारेण पराजयस्यैवाभिधानात् पर्यायोक्तमलङ्कारः । तदुक्तं साहित्यदर्पणे "पर्यायोक्तं यदाभङ्ग्या गम्यमेवाभिधीयते" इति । नात्राप्रस्तुतप्रशंसा, कार्यकारणयोरुभयोरपि वर्णनीयत्वेन प्रस्तुतत्वात् ।

**भावार्थः**—देवाङ्गनासुकुमारहस्तैरपि कर्णावतंसार्थं सदयच्छिन्नकिसलयान् नन्दनोद्यानकल्पवृक्षानसौ तारकासुरः छित्वा पातयतीति भावः ।

**भाषा**—जिन नन्दन वन के किसलयों को देवाङ्गनायें अपने सुकुमार हाथों से कर्णालङ्कार के लिये सदय होकर तोड़ती है, उन नन्दनवन के वृक्षों को तारकासुर निर्दयता से काट कर गिराता है ।

अथ त्रिभिः श्लोकैरपहरणं प्रतिपाद्यते । तत्रादौ दारापहरणमाह—

**वीज्यते स हि संसुप्तः, श्वाससाधारणानिलैः ।**
**चामरैः सुरबन्दीनां बाष्पसीकरवर्षिभिः ॥ ४२ ॥**

तारक असुर सोता, सभय देवाङ्गना सेवा करें ।
वन्दी बनी चामर झलें, नित अश्रु-कण-वर्षा करें

अन्वयः—हि यतः सः संसुप्तः सन् श्वाससाधारणाऽनिलैः बाष्पसीकरवर्षि-
सुरवन्दीनां चामरैः वीज्यते ।

व्याख्या—हि = यस्मात्कारणात् , सः=तारकाऽसुरः, संसुप्तः=संविष्टः सन्,
ससाधारणाऽनिलैः=निःश्वाससमानवायुभिः, बाष्पसीकरवर्षिभिः=अश्रुजलकण-
णशीलैः, सुरबन्दीनां=देवप्रग्रहस्त्रीणां, चामरैः=प्रकीर्णकैः, वीज्यते=निर्वाप्यते ।

व्युत्पत्तिः—संसुप्तः = सम्यक् सुप्तः संसुप्तः, गतिसमासः । श्वाससाधारणा-
नलैः=श्वासेन साधारणः श्वाससाधारणः, सः अनिलः येषां तानि श्वाससाधा-
ाऽनिलानि, तैः श्वाससाधारणाऽनिलैः । बाष्पसीकरवर्षिभिः=बाष्पाणां सीकराः
पसीकाराः, "सीकरोऽम्बुकणाः स्मृताः" इत्यमरः । बाष्पसीकरान् वर्षन्तीति त-
लानि बाष्पसीकरवर्षीणि, तैः बाष्पसीकरवर्षिभिः, ताच्छील्ये णिनिः प्रत्ययः ।
बन्दीनां=सुराणां वन्द्यः सुरबन्द्यः, तासां सुरबन्दीनां, "बन्दी परस्य वनिता हृता
त्वा बलेन या" इति भोजः । चामरैः = "चामरं तु प्रकीर्णकम्" इत्यमरः ।
ज्यते = कर्मणि लट् । अनेन व्यजनानिलानां सुखकरत्वाभावेऽप्यनवरतवीज्य-
नत्ववचनेनासुरविजयिनस्तस्य परपीडामात्रतत्परत्वं व्यज्यते । अत्रापि
र्यायोक्तमलङ्कारः ।

भावार्थः—शयनं प्राप्तः स तारकासुरस्तेन बलात्कारेण हृतानां देवाङ्गनानां
यतमवियोगादिदुःखसन्तप्तदीर्घनिःश्वासवातसदृशवातैर्मुहुर्मुहुः कराभ्यामश्रुप-
ाजर्नात्ताभ्यां व्यजनग्रहणाच्चाश्रुबिन्दुवर्षिभिश्चामरैः वीजितो भवतीति भावः ।

भाषा—जबरदस्ती हरण कर कैद में रक्खी देवाङ्गनायें, प्रियतमवियोग दुःख
गरम गरम निश्वास को छोडती हुयीं, आंख से आसु टपकाती हुयीं, चामरों
सोये हुये तारकासुर को हवा करतीं है ।

अथ धनापहरणमाह—

उत्पाट्य मेरुशृङ्गाणि, क्षुण्णानि हरितां खुरैः ।
आक्रीडपर्वतास्तेन, कल्पिताः स्वेषु वेश्मसु ॥ ४३ ॥

रवि-अश्व खुर से चूर्ण, लेकर गिरि सुमेरु विमल शिखर ।
आक्रीड गिरि अपना बनाया, है असुर ने अति सुघर ॥

अन्वयः—तेन हरितां खुरैः क्षुण्णानि मेरुशृङ्गाणि उत्पाट्य स्वेषु वेश्मसु
आक्रीडपर्वताः कल्पिताः ।

व्याख्या—तेन = तारकाऽसुरेण, हरितां = सूर्याश्वानाम् , खुरैः = शफैः,

क्षुण्णानि=चूर्णितानि, मेरुशृङ्गाणि=सुमेरुशिखराणि, उत्पाट्य = उन्मूल्य स्वकीयेषु, वेश्मसु = गृहेषु, आक्रीडपर्वताः = क्रीडाशैलाः, कल्पिताः = र

व्युत्पत्तिः—हरितां = "हरित् सूर्ये च सूर्याऽश्वे वर्णे च हरिते दिशि" विश्वः । खुरैः = "शफं क्लीबे खुरः पुमान्" इत्यमरः । क्षुण्णानि संचूर्णने" इति धातोः निष्ठायां क्तप्रत्ययः, "रदाभ्यां निष्ठातो नः पूर्वस्य" इति नत्वम् । [एतेन तेषामत्युन्नतत्वमुत्पाटनसौकार्यञ्च सूचितम्] शृङ्गाणि = मेरोः शृङ्गाणि मेरुशृङ्गाणि, तानि "मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः" ॥ इति "कूटोऽस्त्री शिखरं शृङ्गम्" इति चाऽमरः । वेश्मसु="गृहं निकेतनम्" इत्यमरः । आक्रीडन्ते एषु इति आक्रीडाः, ते च ते पर्वताः क्रीडपर्वताः "महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः" इत्यमरः । अत्रापि क्रमलङ्कारः ।

भावार्थः—मेरुपर्यन्तभागेनानुदिनं गच्छतां रवितुरगाणां शफैः क्षुण्णानि सुमेरोः शृङ्गाणि तेन तारकेणोन्मूल्य स्वगृहेषु क्रीडापर्वताः रचिताः सन्तीति

भाषा—प्रतिदिन गमनकरने वाले सूर्यके घोड़ोके टापके आघात से भये हुवे सुमेरु पर्वतके सुवर्णमय शिखरोंको उखाडकर, इस तारकासुर ने घरमें क्रीडापर्वत बनाये है ।

अथोपभोगसाधनानां कनकारविन्दानामप्यपहरणमाह—

**मन्दाकिन्याः पयः शेषं, दिग्वारणमदाविलम् ।**
**हेमाऽम्भोरुहसस्यानां, तद्वाप्यो धाम साम्प्रतम् ॥ ४**

अब जाह्नवी का दन्ति मद कलुषित बचा है शेष जल ।
उसके सुवर्ण कलित कमल से असुर-वापी है विमल ॥

अन्वयः—साम्प्रतं मन्दाकिन्याः दिग्वारणमदाविलं पयः शेषम् । हेमाम्भोरुहसस्यानां तद्वाप्यः धाम ।

व्याख्या—सम्प्रतं = सम्प्रति, मन्दाकिन्याः=आकाशगङ्गायाः दिग्वारणमदाविलं = दिग्गजदानजलकलुषं, पयः = जलम् एव, शेषं = शिष्टम् । सुवर्णकमलानि कुत्र गतानि" इत्याह—हेमाऽम्भोरुहसस्यानां = सुवर्णकमलसस्यानां, तु तद्वाप्यः = तद्दीर्घिकाः एव, धाम = स्थानम्, आसन् इति शेषः ।

व्युत्पत्तिः—साम्प्रतं = सम्प्रति एव साम्प्रतं, "प्रज्ञादिभ्यश्च" इति प्रकृत्यर्थेऽण् । मन्दाकिन्याः="मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका"

। दिग्वारणमदाविलं = दिशां वारणाः दिग्वारणाः, "दिशस्तु ककुभः काष्ठाशाश्च हरितश्च ताः" इति "मतङ्गजो गजो नागः कुञ्जरो वारणः करी" इति अमरः। दिग्वारणानां मदाः दिग्वारणमदाः, तैः आविलं दिग्वारणमदाविलम्, "कलुषोऽनच्छ आविलः" इत्यमरः। पयः = "पयः कीलालममृतं जीवनं भुवनम्" इत्यमरः। शिष्यते इति शेषं, कर्मणि अण् प्रत्ययः। "त्रिष्वन्यत्रोपयुज्यते" नपुंसकत्वम्। हेमाऽम्भोरुहसस्यानाम् = अम्भसि रोहन्तीति अम्भोरुहाणि, अम्भ उपपदपूर्वकात् "रुह बीजप्रादुर्भावे" इति धातोः "इगुपधज्ञाप्रीकिरः कः" कप्रत्ययः, "बिसप्रसूनराजीवपुष्कराऽम्भोरुहाणि च" इत्यमरः। हेम्नः अम्भोरुहाणि हेमाऽम्भोरुहाणि, तानि एव सस्यानि हेमाऽम्भोरुहसस्यानि तेषां हेमाम्भोरुहसस्यानाम्, उत्खातप्रतिरोपणात् सुवर्णपङ्कजेषु सस्यत्वारोपः। तद्वाप्यः = तस्य वाप्यः तद्वाप्यः।

**भावार्थः**—तारकासुरः स्वर्गङ्गासुवर्णपङ्कजान्युन्मूल्य स्ववापीरचनायामुपयोजितवान्, ततश्च संप्रति दिग्गजमदजलकलुषीकृतं स्वर्गङ्गाजलमेव शिष्टमस्तीति भावः॥

**भाषा**—तारकासुरने मन्दाकिनी के सुवर्णकमलो को उखाडकर अपने तलाब लगायें है, इसलिये आज कल मन्दाकिनीमे दिग्गजों के मद से मैला भया हुवा जल मात्र अवशिष्ट रह गया है।

अथ देवानामुपरोधमाह—

**भुवनालोकनप्रीतिः, स्वर्गिभिर्नानुभूयते।**
**खिलीभूते विमानानां, तदापातभयात्पथि ॥ ४५ ॥**

**खल आक्रमण की भीति से नभ-यान चलते हैं नहीं।**
**इससे कभी अब लोक दर्शन, देव करते हैं नहीं ॥**

**अन्वयः**—तदापातभयात् विमानानां पथि खिलीभूते सति स्वर्गिभिः भुवनालोकनप्रीतिः न अनुभूयते ॥

**व्याख्या**—तदापातभयात्=तारकाऽसुरसमापत्तिभीतेः, विमानानां = व्योमयानानां, पथि=मार्गे, खिलीभूते = प्रहतीभूते सति, स्वर्गिभिः=स्वर्गवासिभिः इत्यर्थः, भुवनालोकनप्रीतिः=लोकदर्शनप्रेम, न अनुभूयते = नोपयुज्यते ॥

**व्युत्पत्तिः**—तदापातभयात्=आपतनम् आपातः, भावे घञ्प्रत्ययः। तस्य आपातः तदापातः, तस्मात् भयं तदापातभयं, "भीत्रार्थानां भयहेतुः"

इत्यपादानसञ्ज्ञा, ततः "अपादाने पञ्चमी" इति पञ्चमी । यद्वा, तदा
दित्यत्र "विभाषा गुणेऽस्त्रियाम्" इति हेतौ पञ्चमी । विमानानां="व्योमया
नोऽस्त्री" इत्यमरः । पथि="अयनं वर्त्म मार्गाऽध्वपन्थानः पदवी सृति
मरः । खिलीभूते=अखिलः खिलः यथा सम्पद्यते तथाभूतः खिलीभूत
खिलीभूते, च्विप्रत्ययः । 'द्वे खिलाऽप्रहते समे' इत्यमरः । स्वर्गिभि
अस्ति येषां ते स्वर्गिणः, तैः स्वर्गिभिः, स्वर्गशब्दात् "अत इनिठनौ" इ
प्रत्ययः । भुवनालोकनप्रीतिः=भुवनानाम् आलोकनं भुवनालोकनं, "जग
विष्टपं भुवनं जगत्" इत्यमरः । भुवनालोकने प्रीतिः भुवनालोकनप्रीति

भावार्थः—तारकासुरसमापत्तिभयेन विमानमार्गे प्रहतीभूते सति दे
वस्थितप्रदेशव्यतिरिक्तप्रदेशानां दर्शनप्रीतिर्न प्राप्यत इति भावः ।

भाषा—तारकासुरके भयसे आकाश मार्गमें देवता लोग विमान
नहीं निकलते हैं ।

अथ भोजनस्याप्यपहरणमाह—

**यज्वभिः सम्भृतं हव्यं, विततेष्वध्वरेषु सः ।**
**जातवेदोमुखान्मायी, मिषतामाच्छिनत्ति नः ॥ ४६ ॥**

**इस असुर के कारण प्रभो, सुनिये अवल की दीनता ।**
**मख में दिये यजमान-कर से हव्य मुख से छीनता ॥**

अन्वयः—यज्वभिः विततेषु अध्वरेषु सम्भृतं हव्यं मायी सः
जातवेदोमुखात् आच्छिनत्ति ॥

व्याख्या—यज्वभिः = विधिवत् इष्टवद्भिः, यागं कृतवद्भिः, वि
विस्तृतेषु, अनुष्ठितेषु इत्यर्थः, अध्वरेषु = यज्ञेषु, सम्भृतं = दत्तं, हव्यं
मायी=मायावी, सः=तारकाऽसुरः, नः = अस्माकं, मिषतां=पश्यतां,
सत्सु इत्यर्थः, जातवेदोमुखात् = अग्न्याननात्, आच्छिनत्ति=आक्षिप्य
अपहरतीत्यर्थः ।

व्युत्पत्तिः—यज्वभिः=विधिवत्, इष्टवन्तः इति यज्वानः, तैः
देवपूजाद्यर्थक यजधातोः "सुयजोर्ङ्वनिप्" इति ङ्वनिप्प्रत्ययः, "यज्वा
नेष्टवान्" इत्यमरः । अध्वरेषु="यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः
इत्यमरः । हव्यं=हूयते यत्तत् हव्यं तत् । मायी=माया अस्ति य
मायी, "व्रीह्यादिभ्यश्च" इति इनिप्रत्ययः "सौ च" इति सौ 'दीर्घः । 'स

म्बरी" इत्यमरः । मिषतां=मिषन्तीति मिषन्तः, तेषां मिषतां, धातूपसर्गा-मनेकाऽर्थत्वात् "मिषस्पर्धायाम्" इति धातोः दर्शनार्थे शतृप्रत्ययः। मिषताम् अत्र "षष्ठी चाऽनादरे" इति अनादराऽर्थे षष्ठी । स्पर्धमानानस्माननादृत्येत्यर्थः। जातवेदोमुखात्=जातवेदा एव मुखं जातवेदोमुखं, तस्मात् जातवेदोमुखात् "कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात्" इत्यमरः ।

भावार्थः—मायावी तारकासुरः कृतोरुपक्रमे शाठ्याद् विघ्नं नाचरति, किन्तु यजमानैर्यागेषु प्रवृत्तेषु सत्सु, स्पर्धमानानस्माननादृत्य समर्पितं हवनीयद्रव्यमग्नि-मुखादपहरतीति भावः ।

भाषा—मायावी तारकासुर धूर्तता से यज्ञके आरम्भमे कोई विघ्न उपस्थित नहीं करता है, किन्तु यज्ञमे यजमान द्वारा दी हुई हमलोगोकी आहुतीको अग्नि-मुखसे हमलोगोंके देखते देखते हरण कर लेता है ।

किं बहुना महेन्द्रस्याश्वरत्नमप्यपहृतं तेनेत्याह—

उच्चैरुच्चैःश्रवास्तेन, हयरत्नमहारि च ।
देहवद्धमिवेन्द्रस्य, चिरकालाऽर्जितं यशः ॥ ४७ ॥
चिर काल से अर्जित शचीपति-सुय सम, गति में हुवा ।
उस तारका सुर ने किया है हरण हय उच्चैः श्रवा ॥

अन्वयः—च तेन उच्चैः उच्चैश्रवाः हयरत्नम् देहवद्धं चिरकालार्जितम् इन्द्रस्य यश इव अहारि ॥

व्याख्या—च = किंच, तेन=तारकाऽसुरेण, उच्चैः=उन्नतः, उच्चैः श्र वाः= उच्चैःश्रवो नामकं, हयरत्नम् = अश्वरत्नं, देहवद्धं = बद्धदेहं, मूर्तिमदित्यर्थः, चिर-कालार्जितं = बहुसमयोपार्जितम्, इन्द्रस्य = मघोनः, यश इव = कीर्तिरिव, अहारि = अपहृतम् ।

व्युत्पत्तिः—उच्चैःश्रवाः = उच्चैः श्रवः यस्य स उच्चैःश्रवाः, हयरत्नं = हयः रत्नम् इव हयरत्नं, यद्वा हयेषु रत्नं हयरत्नं । "वाजिवाहाऽर्वगन्धर्वहय-सैन्धवसप्तयः" इत्यमरः "रत्नं स्वजातिश्रेष्ठेऽपि" इत्यप्यमरः । देहवद्धं=देहं बद्धं यस्य तत् देहवद्धं, "वाहिताग्न्यादिषु" इत्यनेन निष्ठायाः परनिपातः । "कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः" इत्यमरः । चिरकालार्जितं=चिरं कालाः चिरकालाः, "कालो दिष्टोऽप्यनेहाऽपि समयः" इत्यमरः। चिरकालैः अर्जितं चिर-कालार्जितं । यशः="यशः कीर्तिः समज्ञा च" इत्यमरः । अत्रोत्प्रेक्षालङ्कारः ।

**भावार्थः**—तारकासुरो महेन्द्रस्य बहुकालसञ्चितं मूर्तिमत् यश इवोच्चैःश्रवा नामाश्वरत्नमपहृतवानिति भावः ।

**भाषा**—तारकासुरने इन्द्रके मूर्तिमान् यशके समान उच्चैःश्रवा नामक घोड़े को छीन लिया है ।

तर्हि सामद्युपायास्तत्र कथं न प्रयुक्ता इत्यत्राह—

**तस्मिन्नुपायाः सर्वे नः, क्रूरे प्रतिहतक्रियाः ।**
**वीर्यवन्त्यौषधानीव, विकारे सांनिपातिके ॥ ४८ ॥**

**यों तारकासुर में हमारे सब उपाय हुए विफल ।**
**ज्यों सन्निपात विकार में औषध न होते हैं सफल ॥**

**अन्वयः**—क्रूरे तस्मिन् नः सर्वे उपायाः सांनिपातिके विकारे वीर्यवन्ति औषधानि इव प्रतिहतक्रियाः भवन्ति ।

**व्याख्या**—क्रूरे = घातुके, तस्मिन्=तारकाऽसुरे, नः = अस्माकं, सर्वे = सम्पूर्णाः, उपायाः=सामादयः, सांनिपातिके=सनिपातभवे, संनिपातदोषत्रयप्रकोपजे इत्यर्थः, विकारे=रोगे ज्वरादौ इत्यर्थः, वीर्यवन्ति=सारवन्ति औषधानि इव=भेषजानि इव, प्रतिहतक्रियाः=निष्फलप्रयोगाः भवन्तीति शेषः ।

**व्युत्पत्तिः**—क्रूरे="नृशंसो घातुकः क्रूरः" इत्यमरः, सांनिपातिके=वातपित्तश्लेष्मसमाहारः सन्निपातः, संनिपातात् भवः सांनिपातिकः, तस्मिन् सांनिपातिके, "संनिपाताच्च" इति ठक्प्रत्ययः, "किति च" इत्यादिवृद्धिः । "विकारो रोगविकृती" इति वैजयन्ती । वीर्यवन्ति=वीर्यम् अस्ति येषु तानि वीर्यवन्ति, प्रशंसायां मतुप्प्रत्ययः । "नपुंसकस्य झलचः" इति नुम् । औषधानि=ओषध्य एव औषधानि, स्वार्थे अण्, "भेषजौषधभैषज्यान्यगदो जायुः" इत्यमरः । प्रतिहतक्रियाः=प्रतिहता क्रिया येषां ते प्रतिहतक्रियाः । क्रियते सा क्रिया, "कृञः च" इति शप्रत्ययः । अत्रोपमालङ्कारः ।

सन्निपातज्वरादावौषधानां निष्फलत्वमुक्तं वैद्यशास्त्रे—

"वातपित्तकफानां च सन्निपातो यदा भवेत् ।
तदा जातो ज्वरस्तीव्रो ह्यसाध्यः सर्वभेषजैः ॥" इति ।

**भावार्थः**–दोषत्रयसम्भवे ज्वरादौ महावीर्याण्यौषधानीवास्माकं सर्वे उपाया घातुके तारकासुरे प्रतिहतशक्तयो जाता इति भावः ।

भाषा—जैसे सान्निपातिक रोगमें अत्युत्कृष्ट औषध भी काम नही करता, उसी तरह दुष्ट तारकासुरके विषयमे हम लोगों के सब उपाय निष्फल होजाते हैं ।

...देव प्रतिहतक्रियत्वमाह—

> जयाशा यत्र चाऽस्माकं, प्रतिघातोत्थिताऽर्चिषा ।
> हरिचक्रेण तेनाऽस्य, कण्ठे निष्कमिवाऽर्पितम् ॥ ४९ ॥
> प्रतिघात से ज्वाला उठी मारा उसे हरि चक्र ने ।
> उलटे गले में स्वर्ण का भूषण पिन्हाया चक्र ने ॥

अन्वयः—यत्र अस्माकं जयाशा, प्रतिघातोत्थितार्चिषा तेन हरिचक्रेण च अस्य कण्ठे निष्कम् अर्पितम् इव ।

व्याख्या—यत्र = हरिचक्रे, अस्माकं, = नः, जयाशा=विजयाशंसा 'नूनमनेन वयं जेष्यामः' इत्याकारिकासीदिति शेषः । प्रतिघातोत्थितार्चिषा=प्रतिहतोद्गततेजसा, तेन=प्रसिद्धेन, हरिचक्रेण=विष्णुचक्रेण सुदर्शनेनेत्यर्थः । च=अपि, अस्य=तारकाऽसुरस्य, कण्ठे=गले, निष्कम् = उरोभूषणम्, अर्पितम् =दत्तम् इव ।

व्युत्पत्तिः—यत्र=यस्मिन्निति यत्र, "सप्तम्यास्त्रल्" इति त्रल् । जयाशा=जयः, "जि जये" इति धातोः "एरच्" इति अच्प्रत्ययः, तदन्तस्य "घञबन्ताः पुंसि" इति लिङ्गाऽनुशासनात् पुंस्त्वम् । जयस्य आशा जयाशा । प्रतिघातोत्थितार्चिषा=प्रतिघातेन उत्थितं प्रतिघातोत्थितं, तत् अर्चिः यस्य तत् प्रतिघातोत्थितार्चिः, तेन प्रतिघातोत्थितार्चिषा । "ज्वालाभासोर्न पुंस्यर्चिः" इत्यमरः । हरिचक्रेण = हरेः चक्रं, हरिचक्रं, तेन हरिचक्रेण । चकारोऽप्यर्थे । निष्कं="साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि च निष्कोऽस्त्री' इत्यमरः । उत्प्रेक्षाऽलङ्कार; ।

भावार्थः—यस्मिन्सुदर्नचक्रेऽस्माकं "जेष्यामो वयमनेने"त्याशा पूर्वमासीत्, ...तलकर्कशे तारकासुरकण्ठे पतितेन तेन विष्णुचक्रेण कण्ठदेशकाठिन्यादुद्गत...वक्षःस्थलपर्यन्तलम्बमानयाऽनलज्वालयाऽस्य ग्रीवायां महत्तरमुरोभूषणमर्पितमिवेति भावः ।

भाषा—हम लोगों की पूर्ण जयाशा जिसपर निर्भर है, उस सुदर्शन चक्रसे ...सदृश कठोर तारकासुरके कण्ठके सङ्घर्ष होने से निकली हुयी चिनगारियां ...गलेमें मानों हार पहिनाया हो ऐसी मालुम होती है ।

अथ तदवष्टम्भेन तदीयानां गजानां दुर्विलसितमाह—

**तदीयास्तोयदेष्वद्य, पुष्करावर्तकादिषु ।**

**अभ्यस्यन्ति तटाघातं, निर्जितैरावता गजाः ॥ ५० ॥**

विजयी अमर-गज के, असुर-गज केलि निशिदिन कर रहे ।

वे पुष्करावर्त्तक घनों में वप्रक्रीडा कर रहे ॥

**अन्वयः**—अद्य निर्जितैरावताः तदीयाः गजाः पुष्करावर्तकादि[षु] तटाघातम् अभ्यस्यन्ति ।

**व्याख्या**—अद्य=सम्प्रति, निर्जितैरावताः=स्वायत्तीकृताऽभ्रमातङ्[गाः, तदी]याः=तारकाऽसुरसम्बन्धिनः, तारकाऽसुरस्येत्यर्थः, गजाः=कुञ्जराः, [पुष्करावर्त]कादिषु=पुष्करावर्तकप्रभृतिषु, तोयदेषु=मेघेषु, तटाघातं=वप्रक्रीडा[म्, अभ्य]स्यन्ति=पुनः पुनः प्रकुर्वन्ति ।

**व्युत्पत्तिः**—अद्य=अस्मिन्नहनि अद्य, "सद्यःपरुत्परार्यैषमः पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ५।३।२२" इति[...] निर्जितैरावताः=निर्जितः ऐरावतः यैस्ते निर्जितैरावताः "ऐरावतोऽभ्र[मातङ्गैरावण]ाऽभ्रमुवल्लभाः" इत्यमरः । तदीयाः=तस्य इमे तदीयाः "त्यदादीनि[...]" सूत्रेण तच्छब्दस्य वृद्धसंज्ञा, ततः "वृद्धाच्छः" इति छप्रत्ययः । गजाः[=...] गजो नागः कुञ्जरो वारणः करी" इत्यमरः । पुष्करावर्तकादिषु=पुष्करा[व]र्तकाश्च पुष्करावर्तकाः, ते आदयः येषां ते पुष्करावर्तकादयः, तेषु पुष्करा[...] तोयदेषु=तोयानि ददतीति तोयदाः, तेषु तोयदेषु, तोयोपपदपूर्वका[त् "दा] दाने" इति धातोः "आतोऽनुपसर्गे कः" इति अरापवादः कप्रत्ययः । त[टाघातं=] तटे अघातः, तटाघातः तं तटाघातं । मत्तानां गजानां गिरिवप्रादिषु [...]नार्थं यो दन्तप्रहारस्तमित्यर्थः ।

**भावार्थः**—ऐरावतपराजयं कर्तारस्तारकासुरस्य गजाः दर्पकण्डूवि[नोदमन्]यत्र दुर्लभत्वेन पुष्करावर्तकादिषु महामेघेषु वप्रक्रीडां पुनःपुनः प्रकुर्वन्ति ।

**भाषा**—ऐरावत का भी पराजय करने वाले तारकासुरके महा[गज] दर्पकण्डु की शान्ति न मिलने से, वारंवार पुष्करावर्तकादि महामेघों में [वप्रक्रीडा] किया करते हैं ।

अथ तत्र प्रतीकाररूपं स्वाभिलषितं प्रार्थयते—

**तदिच्छामो विभो ! स्रष्टुं सेनान्यं तस्य शान्तये ।**

कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ॥ ५१ ॥

खल-नाश अर्थ कुमार सम्भव चाहते हम इस तरह ।
भव-कर्म-नाशक धर्म को हैं, मोक्ष इच्छुक जिस तरह ॥

**अन्वयः**—तत् विभो ! मुमुक्षवः भवस्य शान्तये कर्मबन्धच्छिदं धर्मम् इव शान्तये सेनान्यं स्रष्टुम् इच्छामः ।

**व्याख्या**—तत्=तस्मात् कारणात्, हे विभो !=हे स्वामिन् !, मुमु- :—मोक्षेच्छवः, भवस्य=संसारस्य, शान्तये=निवृत्तये, कर्मबन्धच्छिदं= ापाशच्छेदकं, धर्मम् इव=सुकृतम् इव=आत्मज्ञानकारणभूतमिति शेषः । ।=तारकाऽसुरस्य, शान्तये=नाशाय, सेनान्यं=सेनापतिं, कञ्चित्, स्रष्टुम्= र्मातुम्, इच्छामः=वाञ्छामः । वयमिति शेषः ॥

**व्युत्पत्तिः**—तत्=इदं तच्छब्दप्रतिरूपकमव्ययम् । मुमुक्षवः=मोक्तुम्= त्यक्तुम् इच्छवः मुमुक्षवः, सन्प्रत्ययान्तात् मुच्लृधातोः "सनाशंसभिक्ष उः" उप्रत्ययः । कर्मबन्धच्छिदं=क्रियते यत्तत् कर्म, "कर्म क्रिया" इत्यमरः । एव बन्धः, "मयूरव्यंसकादयश्च" इति रूपकसमासः । कर्मबन्धं छिन- ते कर्मबन्धच्छित् तं कर्मबन्धच्छिदं, क्विप्प्रत्ययः । धर्मं=धरति विश्वम् धर्मस्तं धर्मं, "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" इत्यमरः । "तमेव दित्वाऽतिमृत्युमेति नाऽन्यः पन्था विद्यतेऽयनाय" इति श्रुतेः ज्ञानादेव मुक्तिः यते । सेनान्यं=सेनां नयतीति सेनानीः, तं सेनान्यं, सेनोपपदपूर्वकात् "णीञ् णे इति धातोः "सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि ।" इति क्विप्रत्ययः । "ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः" इति नीर्वाहिनीपतिः" इति "पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः" इति प्यमरः । अत्रोपमालङ्कारः ।

**भावार्थः**—हे प्रभो ! यथा मुमुक्षवः संसारस्य नाशाय निवृत्तिलक्षणं धर्म- छन्ति, तथा विपद्ग्रस्ता वयं तारकासुरस्य नाशाय देवसेनानायकं निर्मातु- लषामः इति भावः ।

**भाषा**—हे प्रभो ! जैसे मुमुक्षुजन संसारके नाश होने के लिये निवृत्ति धर्म इच्छा करते है, उसी तरह विपत्ति में पडे हुये हम सब भी, तारकासुर के नाश लये देवसेनाका अधिनायक उत्पन्न कराना चाहते हैं ।

सेनानीसृष्टेः फलमाह—

गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित् ।
प्रत्यानेष्यति शत्रुभ्यो बन्दीमिव जयश्रियम् ॥ ५२ ॥

सुर सैन्य रक्षक गोत्रभित् आगे जिसे कर मोद से ।
बन्दीव जय श्री छीन लेंगे असुर-तारक-गोद से ॥

**अन्वयः**—सुरसैन्यानां गोप्तारं यं पुरस्कृत्य गोत्रभित् जयश्रियं बन्दीम् शत्रुभ्यः प्रत्यानेष्यति ॥

**व्याख्या**—सुरसैन्यानां = देवसैनिकानां, गोप्तारं = रक्षकं, यं = पुरस्कृत्य = पुरोधाय, अग्रे कृत्वा इत्यर्थः, गोत्रभित् = इन्द्रः, जयश्रियं लक्ष्मीं, बन्दीम् इव = हठहृतमहिलाम् इव, शत्रुभ्यः = वैरिभ्यः सकाशात् नेष्यति = प्रत्याहरिष्यति ॥

**व्युत्पत्तिः**—सुरसैन्यानां=सेनां समवयन्ति सैन्याः, "सेनायां वा इति ण्यप्रत्ययः, "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते" इत्यमरः सैन्याः / सुरसैन्याः, तेषां सुरसैन्यानां, "त्रिदशा विबुधाः सुराः" इ गोप्तारं=गोपायतीति गोप्ता, तं गोप्तारं, "गुपू रक्षणे" इति धातोः "ण्वु इति तृच्प्रत्ययः । पुरस्कृत्य = पुरः कृत्वा इति पुरस्कृत्य, "पुरोऽव्ययम्" इ गतित्वात् "कुगतिप्रादयः" इति गतिसमासः । "नमस्पुरसोर्गत्योः" इ । स गस्य सकारश्च । गोत्रभित् = गां=पृथ्वीं त्रायन्ते इति गोत्राः पर्वताः, "त्रैङ् पालने" इति धातोः "आतोऽनुपसर्गे कः ३।२।३" इति कप्रत्ययः । उपदेशेऽशिति" इति ऐकारस्य आत्वम् । "अद्रिगोत्रगिरिग्रावाऽचल चयाः" इत्यमरः । गोत्रान् भिनत्तीति गोत्रभित्, "सुत्रामा गोत्रभिद्वज्री वृत्रहा वृषा" इत्यमरः । जयश्रियं=जयस्य श्रीः जयश्रीः, तां जयश्रियं, श्रीश्च लक्ष्मीश्च" इत्यमरः । शत्रुभ्यः = ध्रुवमपायेऽपादानम् इत्यपा "अपादाने पञ्चमी" इति पञ्चमी, "द्विड्विपक्षाऽहिताऽमित्रदस्युशात्र इत्यमरः । अत्रोपमालङ्कारः ॥

**भावार्थः**—यादृशेन सेनानायकेन महेन्द्रो दुर्दान्तशक्तिं सम्पाद्य हठहृतमहिलामिव शत्रुवशवर्तिनीं देवलक्ष्मीं प्रत्यानेतुं समर्थो भवेत् सेनानीः भवता सृज्यतामिति भावः ।

**भाषा**—जिस सेनापतिके द्वारा महेन्द्र अपनी दुर्दान्त शक्तिको बढ़ा

वशीभूत देवलक्ष्मीको वापस लाने मे स्वयं समर्थ हो जाय, ऐसे सेनापति की
ष्टि आपको करनी चाहिये ।

अथ ब्रह्मणः प्रतिवचनमाह—

**वचस्यवसिते तस्मिन्ससर्ज गिरमात्मभूः ।**
**गर्जितानन्तरां वृष्टिं सौभाग्येन जिगाय सा ॥ ५३ ॥**

**गुरु के वचन सुन विधि गिरा निकली सरस पावन भली ।**
**घन की गरज के बाद उसने वृष्टि–शोभा जीतली ॥**

**अन्वयः**—तस्मिन् वचसि अवसिते सति आत्मभूः गिरं ससर्ज । सा सौभा-
न गर्जिताऽनन्तरां वृष्टिं जिगाय ॥

**व्याख्या**—तस्मिन्=बार्हस्पत्ये, बृहस्पतेरित्यर्थः, वचसि=वचने, अवसिते=
समाप्ते सति, आत्मभूः=ब्रह्मा, गिरं=वाणीं, ससर्ज=उत्पादयामास, जगा-
यर्थः । सा = गीः, सौभाग्येन=मनोहरत्वेन, गर्जिताऽनन्तरां = गर्जिताऽनुप्र-
गां, वृष्टिं=वर्षं, जिगाय = जितवती ॥

**व्युत्पत्तिः** – वचसि=“व्याहार उक्तिर्लपितं भाषितं वचनं वचः” इत्यमरः ।
त्मभूः=आत्मना भवतीति आत्मभूः, “ब्रह्माऽऽत्मभूः सुरज्येष्ठः परमेष्ठी पिता-
:” इत्यमरः । गिरं=“ब्राह्मी तु भारती भाषा गीर्वाग् वाणी सरस्वती” इत्य-
: । ससर्ज – “सृज विसर्गे” इति धातोर्लिट् । गर्जिताऽनन्तरां = गर्जितात्
र्जितस्य वा अनन्तरा गर्जिताऽनन्तरा, तां गर्जितानन्तरां, “स्तनितं गर्जितं
निर्घोषे रसितादि च” इत्यमरः । वृष्टिं=“वृष्टिर्वर्षम्” इत्यमरः । जिगाय =
जि जये” इति धातोर्लिट् । सन्लिटोर्जेः” इति कुत्वम् । अत्राप्युपमालङ्कारः ।

**भावार्थः**—बृहस्पतिवचनानन्तरं ब्रह्मा यां वाचं जगाद, सा वाक् अम्भोधर-
नितानन्तरं सम्भूतां वृष्टिं सुभगत्वेनाजैषीत् इति भावः ।

**भाषा**—इस तरह बृहस्पतिके कथनके उपरान्त ब्रह्मदेवजीने कही हुयी वाणी
के गरजने पर होनेवाली वृष्टि के समान सुन्दर मालूम होती थी ।

मेव गिरं प्रपञ्चयति—

**सम्पत्स्यते वः कामोऽयं कालः कश्चित्प्रतीक्ष्यताम् ।**
**न त्वस्य सिद्धौ यास्यामि, सर्गव्यापरमात्मना ॥ ५४ ॥**

**इच्छा तुम्हारी पूर्ण होगी, पर रुको कुछ दिन समय ।**
**नाशार्थ उसके सृष्टि कर सकता स्वयं न किसी समय ॥**

**अन्वयः**—अयं वः कमः सम्पत्स्यते, कश्चित्, कलः प्रतीक्ष्यताम्। अस्य सिद्धौ आत्मना सर्गव्यापारं न यास्यामि ॥

**व्याख्या**—हे देवाः! अयं, वः =युष्माकं, कामः =अभिलाषः, सेत्स्यति, कश्चित्=कियानपि, कार्यसाधनक्षमः, कालः=समयः, प्रतीक्षा क्रियताम् । तु = किन्तु, अस्य = कामस्य, सेनान्यो वा, सिद्धौ विषये, आत्मना = स्वयं, सर्गव्यापारं,=सृष्टिक्रियां, न यास्यामि = न नाहं स्रक्ष्यामीत्यर्थः ।

**व्युत्पत्तिः**—कामः=काम्यते अयम् इति कामः, "कामोऽभिला इत्यमरः । सिद्धौ = अत्र वैषयिकी सप्तमी । सर्गव्यापारं = सर्ग एव सर्गव्यापारः, तं सर्गव्यापारं । यास्यामि = 'या गतौ" इति धातोः च" इति लृट् ।

**भावार्थः**—युष्माकं सेनानीप्राप्तिरूपो मनोरथः सिद्धिं यास्यति, साधनक्षमः कश्चन समयःप्रतिपाल्यताम् , भवत्कार्यसिध्यर्थमहमात्मांशेन न स्रक्ष्यामि, इति भावः ।

**भाषा**—हे देवलोक ! आपकी सेनापतिकी प्राप्तिकी इच्छा पूरी हो इस कार्यके सिद्धि होनेमें थोड़े दिनकी प्रतीक्षा करनी होगी । क्यों कि ता मारने के लिये हम अपने अंश को स्वयं उत्पन्न नही करसकते है । अत्र कारणमाह—

> **इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।**
> **विषवृक्षोऽपि संवर्द्ध्य, स्वयं छेत्तुमसाम्प्रतम् ॥ ५५ ॥**
> मैं ने दिया वरदान फिर मारूं कदापि उचित नहीं ।
> विष तरु लगाकर भी उसे, है काटना समुचित नहीं ॥

**अन्वयः**—इतः प्राप्तश्रीः सः दैत्यः इतः एव क्षयं न अर्हति। अपि संवर्द्ध्य स्वयं छेत्तुम् असाम्प्रतम् ॥

**व्याख्या**—इतः=अस्मात् , मत्त इत्यर्थः, प्राप्तश्रीः=लब्ध दैत्यः=दानवः, तारकाऽसुर इत्यर्थः, इत एव = मत्त एव, क्षयं= अर्हति=न योग्यो भवति । विषवृक्षोऽपि=गरलतरुरपि, संवर्द्ध्य वर्द्धयित्वा, कुतश्चित्कारणादिति शेषः, स्वयम्=आत्मना एव, छेत्तुम् असाम्प्रतम्=अयुक्तम् । साम्प्रतमित्यस्य हि युज्यत इत्यर्थः ।

व्युत्पत्तिः—इतः=अस्मात् इति इतः, पञ्चम्यर्थे तसिः । प्राप्तश्रीः=प्राप्त श्रीः सः प्राप्तश्रीः । दैत्यः = दितेरपत्यं पुमान् दैत्यः, दितिशब्दात् "दित्यदित्यादित्य त्तरपदाण्ण्यः" इति ण्यप्रत्ययः, "तद्धितेष्वचामदेः" इति आदिवृद्धिश्च, सुरा दैत्यदैतेयदनुजेन्द्राऽरिदानवाः" इत्यमरः । क्षयं="क्षि क्षये" इति धातोः रच्" इति अच् प्रत्ययः । विषवृक्षः=विषस्य वृक्षः विषवृक्षः । विषवृक्षो नाम णिनां मरणप्रदो वृक्षविशेषः । तदुक्तम्—

"यस्य स्पर्शनमात्रेण वायुसंस्पर्शनेन वा ।
म्रियन्ते जन्तवः सर्वे विषवृक्षः स कीर्तितः ॥" इति ।

छेत्तुम् इत्यत्र क्रियार्थकक्रियायामन्वयात् । अत्र द्वितीयाविभक्तौ प्राप्तायामपि साम्प्रतमित्यनेन निपातेत अभिहितत्वात् द्वितीयान्तो न भवति, अनुक्ते कर्मणि तीयाविधानात् । यथाह वामनः—"निपातेनाप्यभिहिते कर्मणि न विभक्तिः, परि-नस्य प्रायिकत्वात्" तथा चोक्तं कौमुद्यां दीक्षितेनापि "क्वचिन्निपातेनाभिधान" ते । "क्ष्वेडस्तु गरलं विषम्" इत्यमरः । संवर्द्ध्य=समुपसर्गपूर्वकात् "वृधु ौ" इति धातोः क्त्वाप्रत्ययः, तस्य स्थाने ल्यप् च । असाम्प्रतं=न साम्प्रतम् साम्प्रतं "युक्ते द्वे साम्प्रत" मित्यमरः ।

अत्र विशेषस्य सामान्येन समर्थनात् अर्थान्तरन्यासोऽलङ्कारः ।

**भावार्थः**—मया दत्तवरस्य तारकासुरस्य मयैव हननमनुचितम् । कुतश्चेत् दे केनचित् पुरुषेण प्राणिनां मरणप्रदोऽपि विषवृक्षो येन केनापि प्रकारेण वर्धितो त्, तर्हि तस्यापि तत्पुरुषकर्तृको नाशो न युज्यत इति भावः ।

**भाषा**—अपने हाथसे लगाया जहरका पेडभी अपनेही हाथसे काटना जिस-ह अनुचित है, ऐसेही हमारे वरसे बढ़ा हुवा तारकासुरदैत्य हमसे ही नाश नेके योग्य नही है ।

स्य स्वयं हनने मम प्रतिज्ञाभङ्गोऽपि भवेदित्याह—

वृतं तेनेदमेव प्राङ् मया चाऽस्मै प्रतिश्रुतम् ।
वरेण शमितं लोकानलं दग्धुं हि तत्तपः ॥ ५६ ॥

उसकी प्रथम था प्रार्थना मैं सुर अवध्य रहूँ सदा ।
स्वीकार कर तप-ताप से जग को बचाया था तदा ॥

**अन्वयः**—प्राक् तेन इदम् एव वृतं, मया च अस्मै प्रतिश्रुतम् । हि लोकान् ग्धुम् अलं तत्तपः वरेण शमितम् ।

**व्याख्या**—प्राक्=पूर्वे, तेन = तारकाऽसुरेण, इदम् एव = देवैः
एव, वृतं =प्रार्थितं, मया च=ब्रह्मदेवेन च, अस्मै =तारकाऽसुराय,
प्रतिज्ञातम् । हि=यस्मात्कारणात् , लोकान् = भुवनानि, दग्धुं = भ
अलं=समर्थं, तत्तपः=तारकाऽसुरतपः, वरेण—वरदानेन, शमितं=शान्ति

**व्युत्पत्तिः**—वृतं="वृञ् वरणे" इति धातोः क्तप्रत्ययः अस्मै=
इत्यत्र अन्वयात् "प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता" इति सम्प्रदान
दग्धुं = "दह भस्मीकरणे" इति धातोः "पर्याप्तिवचनेष्वलमर्थेषु" इति
यः । तत्तपः=तस्य तपः तत्तपः । शमितं = शमु उपशमे इति धा
निष्ठायां "वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः" इति पाक्षिकः इडा

"वरेणाशमित" मिति युक्तः पाठः । तत्तपः वरेण अशमितं स
दग्धुमलमिति हि तस्यार्थः । यथोक्तं श्री भगवते हिरण्यकशिपोस्त

"तस्य मूर्ध्नः समुद्भूतः सधूमोऽग्निस्तपोमयः ।
तिर्यगूर्ध्वमधो लोकानतपद् विश्वगीरितः ॥" इति. स्क. ७अ.

अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थनिष्पादकत्वेन काव्यलिङ्गमलङ्का
साहित्यदर्पणे—"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते" इति । "
हेतुः काव्यलिङ्गस्य विषय" इति च तत्रैव ।

**भावार्थः**—स तारकासुरो वरप्रदानसमये तपसा सन्तुष्टं मां प्रति
ध्यत्वमेवाभ्यर्थितवान्, तथाऽस्त्विति मया तं प्रत्यनुज्ञातञ्च । यदि तदा
वरं नादास्यं, तर्हि तस्य मूर्धानं निर्भिद्य निर्गतस्तपोमयो वह्निः सर्वान्
भस्मसादकरिष्यदिति भावः ।

**भाषा**—तारकासुरके घोर तपश्चर्या से खुश होकर हमने उसको
की प्रतिज्ञा की है । अगर ऐसा वर न देते तो उसके ब्रह्मरन्ध्र से नि
तपोमय अग्नि से सकल लोक भस्म हो जाता ।

अथापत्प्रतीकारोपायं दर्शयितुमारभते—

**संयुगे सांयुगीनं तमुद्यतं प्रसहेत कः ।**
**अंशादृते निषिक्तस्य, नीललोहितरेतसः ॥ ५७ ॥**

वह युद्ध तत्पर तारकासुर समार-कुशल अपार है ।
कोई गिरिश-सुत के विना उसको न सकता मार है ॥

**अन्वयः**—संयुगे उद्यतं सांयुगीनं तं निषिक्तस्य नीललोहितरेतसः अंशात् ऋते कः प्रसहेत ।

**व्याख्या**—संयुगे=युद्धे, उद्यतं=व्याप्रियमाणं तत्परम् इत्यर्थः, सांयुगीनं=र-साधुं, तं=तारकाऽसुरं, निषिक्तस्य=द्रवितस्य स्त्रीयोनौ प्रजार्थमाहितस्येत्यर्थः, नीललोहितरेतसः=शिवशुक्रस्य, अंशात् ऋते=भागं विना, कः, प्रसहेत=सोढुं शक्नुयात्, अभिभवेद्वा ।

**व्युत्पत्तिः**—संयुगे="सम्प्रहाराऽभिसम्पातकलिसंस्फोटसंयुगाः" इत्यमरः । सांयुगीनं=संयुगे साधुः सांयुगीनः, तं सांयुगीनं, संयुगशब्दात् "प्रतिजनादिभ्यः खञ्" इति खञ्प्रत्ययः, खस्य "आयनेयीनीयियः" इत्यादिना ईनादेशः । नीललोहितरेतसः="नीलः कण्ठे लोहितश्च केशेष्विति नीललोहितः" इति पुराणप्रसिद्धिः । "कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः" इत्यमरः । नीललोहितस्य रेतः नीललोहितरेतः, तस्य नीललोहितरेतसः । "शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च" इत्यमरः । अंशात्="ऋते' शब्देन योगे "अन्यारादितरर्ते दिक्शब्दाऽञ्चूत्तरपदाजाहियुक्ते" इति पञ्चमी । कः प्रसहेत=प्रोपसर्गपूर्वकात् "षह मर्षणे" इति धातोः लिङि रूपम् । "धात्वादेः षः सः" इति षस्य सत्वम् । "प्रसहनमभिभव" इति च वृत्तिकारः । नान्यः कोऽपीति काकुवक्रोक्तिः ।

**भावार्थः**—संग्रामे व्याप्रीयमाणं युद्धविशारदं तारकासुरं क्वचित् स्त्रीयोनौ द्रवितस्य हरवीर्यस्यांऽशाद्विनाऽन्यः कः सोढुं शक्नुयात् । न कोऽपीत्यर्थः ।

**भाषा**—युद्धभूमि में लड़ने वाले युद्धविशारद तारकासुरका नाश, किसी स्त्री में शङ्कर के द्वारा उत्पन्न होने वाले शङ्कर के अंश के सिवाय, दूसरा कोई नहीं कर सकता है ।

कथमसौ हर ईदृक्शक्तिरित्याह—

**स हि देवः परं ज्योतिस्तमः पारे व्यवस्थितम् ।**
**परिच्छिन्नप्रभावर्धिर्न मया न च विष्णुना ॥ ५८ ॥**

वे शिव तमोगुण से परे उत्कृष्ट ज्योति स्वरूप हैं ।
मुझसे यथा हरि से अगम शुचि विविध उनके रूप हैं ॥

**अन्वयः**—हि यतः स देवः तमःपारे व्यवस्थितं परं ज्योतिः अस्ति । अतएव मया विष्णुना च परिच्छिन्नप्रभावर्द्धिः न भवति ।

**व्याख्या**—हि यतः=यस्मात्कारणात् स देवः=नीललोहितः, शङ्कर इत्यर्थः,

तमःपारे=तमोगुणपरतः, व्यवस्थितं = प्रतिष्ठितं, तमोगुणाऽतीतमित्यर्थः । कालाद्यनवच्छिन्नं ज्योतिः=तेजः, परमात्माऽस्तीति शेषः । अत एव ब्रह्मणा, विष्णुना च नारायणेन च, परिच्छिन्नप्रभावर्द्धिः=ज्ञातसामर्थ्यस... भवतीत्यर्थः ।

**व्युत्पत्तिः**—देवः=दीव्यतीति देवः । तमःपारे = तमसः = ... पारं तमःपारं, तस्मिन् तमःपारे । विष्णुना = "विष्णुर्नारायणः कृष्णो ... विष्टरश्रवाः" इत्यमरः । परिच्छिन्नप्रभावर्द्धिः = प्रभावस्य ऋद्धिः प्रभावर्द्धि... च्छिन्ना प्रभावर्द्धिः यस्य सः परिच्छिन्नप्रभावर्द्धिः ।

हरतेजसामन्तमवगन्तुं हंसमारुह्य प्रजापतिरूर्ध्वं गतः । विष्णुस्तु ... मादायाधोभागं गतः । बहुदिव्यसंवत्सरं गत्वराभ्यामुभाभ्यामपि न तदन्... इति पौराणिकी कथात्रानुसन्धेया । तदुक्तम्—

"नोर्ध्वं गम्यः सरसिजभुवो नाप्यधः शार्ङ्गपाणे" रिति ।

**भावार्थः**—स हि देवो हरः देशकालाद्यनवच्छिन्नमुत्कृष्टं तेजः, ... परस्तात् स्थितश्चास्ति । यतो भगवान्नारायणोऽहं चेत्युभावप्यावां तस्य हरस्य समृद्धिमियत्तया परिच्छेत्तुं नालमभूवेति भावः ।

**भाषा**—वह शङ्कर भगवान् निरवच्छिन्न तेज है, और अविद्या के ... क्योंकी हम और विष्णु दोनों उस शङ्कर के महिमा के समृद्धि का पता न... सके थे ।

सम्प्रति तदंशोत्पत्तावुपायं दर्शयति—

**उमारूपेण ते यूयं संयमस्तिमितं मनः ।**
**शम्भोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ॥ ५६ ॥**

मन पार्वती छवि पर खिचे, कैलास पति का इस तरह ।
हे देव ! चुम्बक से सदा, है लौह खिचता जिस तरह ॥

**अन्वयः**—ते यूयं संयमस्तिमितं शम्भोः मनः उमारूपेण अय... लोहवत् आक्रष्टुं यतध्वम् ।

**व्याख्या**—ते = कार्यार्थिन इत्यर्थः, यूयं = देवाः, संयमस्तिमितं... धिनिश्चलं, शम्भोः = शिवस्य, मनः=चित्तम् , उमारूपेण = पार्वतीसौ... अयस्कान्तेन = चुम्बकमणिना, लोहवत = अयोधातुम् इव आक्रष्टुम् = ... यतध्वम्=यत्नं कुरुत ।

**व्युत्पत्तिः**—संयमस्तिमितं = रागद्वेषादिविरहः संयमः, संयमेन स्तिमितं संयमस्तिमितं, तत्, शम्भोः="शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः" इत्यमरः। मनः = "चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः। उमारूपेण=उमायाः रूपम् उमारूपं, तेन उमारूपेण, "उमा कात्यायनी गौरी काली हैमवतीश्वरी" इत्यमरः। "रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः। ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपि" इति विश्वः। अयस्कान्तेन="कस्कादिषु च" इति सकारः। लोहवत्=लोहमिव लोहवत्।

अत्र द्वितीयान्तात् "तत्र तस्येव" "तेन तुल्यं क्रिया चेद्वतिः" इति सूत्राभ्यां सप्तम्यन्ततृतीयान्ताद्विहितो वतिप्रत्ययश्चिन्त्य" इति मल्लिनाथस्तन्न। सूत्रयोस्तत्र, तेनेति वा पदं सर्वविभक्त्यर्थानन्तर्भावयतीति कैयटपदमञ्जर्योः प्रतिपादितत्वात्। तथा च ब्राह्मणमिव ब्राह्मणवत् भवन्तं पश्यामीति द्वितीयार्थे वतिरुदाहृतः। अत्र प्रमाणं तु "पूर्ववत् सनः" सूत्रे भगवता पाणिनिना पूर्वस्मादिव पूर्ववत् इति पञ्चम्यर्थेऽपि वतिप्रत्ययस्य निर्देशः कृतः। अन्यथा सप्तम्यन्ततृतीयान्ताभ्यामेव वतिप्रत्ययस्य विधानेन पूर्ववदिति निर्देशानुपपत्तिरित्यलमुपजीव्यविरोधेन।

यतध्वं = "यती प्रयत्ने" इति धातोर्लोटि रूपम्। अत्रोपमाऽलङ्कारः।

**भावार्थः**—सेनानीसर्गद्वारेणापत्प्रतीकारं प्रार्थयमानो यूयं रागद्वेषादिविरहेण निश्चलं हरस्य चित्तमयस्कान्तमणिना लोहधातुमिव पार्वतीसौन्दर्येणाहर्तुं यत्नं कुरुतेति भावः।

**भाषा**—किसी योग्य सेनापति की उत्पत्ति कराकर तारकासुर का नाश करने की प्रार्थना करने वाले आप लोग "लोहचुम्बक से लोहधातु की तरह" पार्वती के सौन्दर्य से रागद्वेषरहित, शङ्कर के स्थिरचित्त का आकर्षण करने के लिये प्रयत्न करें।

निषेकं प्रत्यधिकरणान्तरस्यायोग्यत्वं दर्शयति—

**उभे एव क्षमे वोढुमुभयोर्बीजमाहितम्।**
**सा वा शम्भोस्तदीया वा मूर्तिर्जलमयी मम ॥ ६० ॥**

मेरे तथा शिव-तेज को है कौन जो सुख से धरे।
पर शिव सलिलमय मूर्ति अथवा पार्वती धारण करे ॥

**अन्वयः**—उभयोः शम्भोः मम वा आहितं बीजं वोढुं, क्रमेण शम्भोः सा वा, मम च तदीया जलमयी मूर्तिर्वा, उभे एव क्षमे।

**व्याख्या**—उभयोः=द्वयोः, शम्भोः = शङ्करस्य, मम वा = ब्रह्मणः वा,

आहितं=निषिक्तं, बीजं=वीर्यं, वोढुं,=धारयितुं क्रमेण, शम्भोः, पार्वती वा, मम च, तदीया=तत्सम्बन्धिनी, जलमयी=तोयरूपिणी, तनुर्वा, उभे एव=द्वे एव, क्षमे=समर्थे। नान्याः स्त्रिय इत्यर्थः।

व्युत्पत्तिः—बीजं="शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च", तदीया=तस्य इयं तदीया, तच्छब्दाच्छप्रत्ययः। जलमयी=जलं सा जलमयी, स्वरूपाऽर्थे मयट्प्रत्ययः, टित्वान्ङीप्। मूर्तिः="मूर्तिः कायोः" इत्यमरः। वाशब्दो द्वन्द्वाऽर्थे, न तु अन्याऽर्थे। एतदेवो मेव व्याख्यातं गणव्याख्याने इति मल्लिनाथः।

अत्र दीपकाऽलङ्कारः। प्रस्तुतयोः उमामहेश्वरयोः, अप्रस्तुतयोः त्योश्च औपम्यस्य व्यङ्ग्यत्वात्। यथाह—"प्रस्तुतानामप्रस्तुतानां गम्यत्वे दीपकम्" इति। नेयं तुल्ययोगिता, तस्याः केवलप्रस्तुतविषयत्वेन प्रस्तुतविषयत्वेन च उत्थानादिति।

भावार्थः—उभाभ्यां निषिक्तमुभयोर्वीर्यं धर्तुं शम्भोः सा पार्वती, तदीया जलमूर्तिरित्युभे एव यौषितौ क्षमे। नान्याः स्त्रिय इति भावः।

भाषा—शङ्कर से निषिक्त वीर्य का धारण करने के लिये सिवाय पा और हमारे निषिक्त वीर्य का धारण करने के लिये तदीय जलमयी मूर्ति दूसरी स्त्री समर्थ नही हो सकती है।

एवं कृते सति युष्माकं सिद्धिरवश्यम्भाविनीत्याह—

**तस्यात्मा शितिकण्ठस्य, सैनापत्यमुपेत्य वः।**
**मोक्ष्यते सुरबन्दीनां वेणीर्वीर्यविभूतिभिः ॥ ६१ ॥**

शिव पुत्र सेनापति तुम्हारा हो हरेगा दुख तुरत।
देवस्त्रियों के कैद का मोचन करेगा दुख तुरत ॥

अन्वयः—तस्य शितिकण्ठस्य आत्मा वः सैनापत्यम् उपेत्य वीर्य भिः सुरबन्दीनां वेणीः मोक्ष्यते।

व्याख्या—तस्य=प्रसिद्धस्य। श्रुतिस्मृतिपुराणादिप्रसिद्धस्येत्यर्थः, कण्ठस्य=नीलकण्ठस्य, महादेवस्येत्यर्थः। आत्मा=पुत्रः, वः=युष्माकं त्यं=सेनापतित्वम्, उपेत्य=प्राप्य, वीर्यविभूतिभिः=पराक्रमसम्पत्तिभिः न्दीनां=देवप्रग्रहस्त्रीणां, वेणीः=कचोच्चयान्, मोक्ष्यते=विस्रंसयिष्य

व्युत्पत्तिः—शितिकण्ठस्य=शितिः कण्ठः यस्य सः शितिक

तिकण्ठस्य । "उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत्" इत्यमरः । आत्मा= अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव शरदां म्" इति श्रुतेः । सैनापत्यं=सेनानां पतिः सेनापतिः, तस्य भावः सैनापत्यं, सेनापतिशब्दात् "पत्यन्तपुरोहितादिभ्यो यक्" इति यक्प्रत्ययः, "किति" इति आदिवृद्धिश्च । वीर्यविभूतिभिः=वीर्यस्य विभूतयः वीर्यविभूतयः, भिः वीर्यविभूतिभिः, "विभूतिर्भूतिरैश्वर्यम्" इत्यमरः । सुरबन्दीनां = सुराणां यः सुरबन्द्यः, तासां सुरबन्दीनां । वेणीः="वेणिप्रवेणी" इत्यमरः ।

भर्तृविरहिता हि पतिव्रताः कुलस्त्रियः स्वकेशान् भर्तृसमागमपर्यन्तं दृढं ध्नन्तीति सदाचारः । अत्र "कार्यभूतेन वेणीविश्लेषणेन कारणभूतस्तारकासुरः प्रतीयत" इति पर्यायोक्तमलङ्कारः ।

**भावार्थः**—तस्य नीलकण्ठस्यात्मजो युष्माकं सेनापतित्वं प्राप्य स्वपराक्रतेशयैस्तारकासुरेण बलादाहृतानां देवाङ्गनानां संश्लिष्टकेशान् विश्लेषयिष्यती भावः ।

**भाषा**—उस शङ्कर का पुत्र आप लोगों का सेनापति बनकर, अपने उत्कृष्ट क्रम से, तारकासुर ने जबरदस्ती से हरण की हुई देवाङ्गनाओं के उलझे हुए पाशों को सुलझावेगा, अर्थात् वह तारकासुरको मारेगा ।

थ प्रकरणमुपसंहरति—

> इति व्याहृत्य विबुधान्विश्वयोनिस्तिरोदधे ।
> मनस्याहितकर्तव्यास्तेऽपि देवा दिवं ययुः ॥ ६२ ॥
> विधि ने कहा इस तरह सबसे, फिर गये निज धाम को ।
> कर्तव्य निश्चय कर, सकल सुर भी, गये सुरधाम को ॥

**अन्वयः**—विश्वयोनिः विबुधान् इति, व्याहृत्य तिरोदधे । ते देवा अपि मनसि हितकर्तव्याः सन्तः दिवं ययुः ।

**व्याख्या**—विश्वयोनिः=संसारहेतुः, ब्रह्मदेव इत्यर्थः । विबुधान्=देवान्, =पूर्वोक्तं, व्याहृत्य=उक्त्वा, तिरोदधे = अन्तर्हितवान् । ते, देवा अपि = अपि, मनसि=हृदये, आहितकर्तव्याः=समारोपितकार्याः सन्तः, दिवं= र्गं, ययुः=प्रापुः ।

**व्युत्पत्तिः**—विश्वयोनिः=विश्वस्य योनिः, "योनिः स्त्रीणां भगस्थाने कारणे ...के पणे" इति वैजयन्ती । विबुधान् = विशेषेण बुध्यन्ते इति विबुधाः, तान्

विबुधान् । "त्रिदशा विबुधाः सुराः" इत्यमरः । आहितकर्तव्याः=कृ..., तेन कर्तव्यं, "डुकृञ् करणे" इति धातोः "तव्यत्तव्यानीयरः" इति तव्यत् ...म्" आहितं कर्त्तव्यं यैस्ते आहितकर्तव्याः । अनन्तरकरणीयं मनसा निश्चि... दिवं = "सुरलोको द्योदिवौ द्वे स्त्रियां, क्लीबे त्रिविष्टपम्" इत्यमरः ।

**भावार्थः**—जगतः कर्ता ब्रह्मा सुरान् पूर्वोक्तप्रकारेणोक्त्वाऽन्तर्हितः... तेऽपि सुराः अनन्तरकरणीयं मनसा निश्चित्य स्वर्गं जग्मुरिति भावः ।

**भाषा**—जगत् का निर्माण करने वाले ब्रह्माजी देवताओं से इस प्र... कर गुप्त होगये । वे देवता भी आगे जो करना है उसका मनमें निश्चय क... को चले गये ।

अथ पार्वतीपरमेश्वरसङ्गमोपायानुष्ठानरूपमुत्तरसर्गार्थं बिन्दुमुपक्षिपति—

> **तत्र निश्चित्य कन्दर्पमगमत्पाकशासनः ।**
> **मनसा कार्यसंसिद्धौ, त्वराद्विगुणरंहसा ॥ ६३ ॥**
>
> उसमें सहायक काम को समझा अमरपति ने सफल ।
> अत्यन्त उत्सुकता लिये रतिनाथ-ध्यान किया अटल ॥

**अन्वयः**—पाकशासनः तत्र निश्चित्य कार्यसंसिद्धौ त्वराद्विगुणरंहसा ... कन्दर्पम् अगमत् ।

**व्याख्या**—पाकशासनः=इन्द्रः, तत्र = दिवि, निश्चित्य = सम्य... कार्यसंसिद्धौ = कर्मनिष्पत्तौ । हरगौरीसमागमरूपायामिति शेषः, त्वराद्विगु... औत्सुक्यद्विरावृत्तवेगेन, मनसा = चित्तेन, कन्दर्पं = कामदेवम्, अ... अयात् । समीपागमनार्थं सस्मारेत्यर्थः ।

**व्युत्पत्तिः**—पाकशासनः=पाकं शासयति पाकशासनः, पाकोपप... णिजन्तात् "शासु अनुशिष्टौ" इति धातोः "नन्दिग्रहिपचादिभ्यो ल्युणिन्... नन्द्यादित्वाल्ल्युप्रत्ययः, 'युवोरनाकौ" इति तस्य अनादेशः । "इन्द्रो म... घवा बिडौजाः पाकशासनः" इत्यमरः । तत्र=तस्मिन् इति तत्र, "सप्त... इति त्रल्प्रत्ययः । निश्चित्य=करिष्यमाणमुपायानुष्ठानं मन्त्रिभिः सह संम... कार्यसंसिद्धौ=सम्यक् सिद्धिः संसिद्धिः, गतिसमासः । कार्यस्य संसि... संसिद्धिः, तस्यां कार्यसंसिद्धौ । त्वराद्विगुणरंहसा=द्वौ गुणौ=आवृत्ती, ... द्विगुणं, "गुणस्तु वृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु" इति वैजयन्ती । ... सम्भ्रमेण, औत्सुक्येन वा, द्विगुणं=प्रवृद्धं, त्वराद्विगुणं रंहः यस्य तत् त्व...

ः, तेन त्वराद्विगुणरंहसा । "रंहस्तरसी तु रयः स्यदः" इत्यमरः । कन्दर्पं =
कम्" इति अव्ययं कुत्सायाम् । कुत्सितः दर्पः यस्य सः कन्दर्पः, तं कन्दर्पं,
कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः" इत्यमरः । अगमत् = "गम्लृ
तौ" इति धातोर्लुङ् । लृदित्वात् च्लेः "पुषादिद्युताद्यॢदितः परस्मैपदेषु"
ति अङादेशः ।

**भावार्थः**—इन्द्रः स्वर्गे करिष्यमाणमुपायानुष्ठानं देवैः सम्यगवधार्य स्वाभि-
प्रेतस्य सेनानीलाभरूपस्यार्थस्य स्वमनोरथानुरूपे लाभे त्वरया प्रवृद्धवेगेन मनसा
दनं सस्मारेति भावः ।

**भाषा**—स्वर्ग में जाकर इन्द्र ने देवताओं के साथ सलाह कर स्वमनोरथा-
रूप सेनापति के प्राप्ति के लिये त्वरा रखने वाले अत्यन्त वेग शील मन से
मदेव का स्मरण किया ।

अथोपदिष्टस्योत्तरसर्गबिन्दोराविर्भावं दर्शयति—

> **अथ स ललितयोषिद्भ्रूलता चारुशृङ्गं**
> **रतिवलयपदाङ्के चापमासज्य कण्ठे ।**
> **सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः**
> **शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥ ६४ ॥**
>
> निज धनुष स्त्री-भ्रू सम लिया रतिवलय चिह्नित कण्ठ में ।
> आ साथ ऋतुपति काम बोला देव ! क्या आज्ञा हमें ॥

**अन्वयः**—अथ स पुष्पधन्वा ललितयोषिद्भ्रूलताचारुशृङ्गं चापं रतिवलयप-
दाङ्के कण्ठे आसज्य सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः प्राञ्जलिः सन् शतमखम्
उपतस्थे ।

**व्याख्या**—अथ=अनन्तरं, स्मरणाऽनन्तरमित्यर्थः, सः=स्मृतः, पुष्प-
धन्वा=कुसुमकार्मुकः, कामदेव इत्यर्थः, ललितयोषिद्भ्रूलताचारुशृङ्गं=सुन्दरस्त्री
भ्रूततिमनोहरकोटि, चापं=धनुः, रतिवलयपदाऽङ्के=कामप्रियाकङ्कणस्थानचिह्ने,
कण्ठे=गले, आसज्य=आरोप्य, स्थापयित्वेत्यर्थः । सहचरमधुहस्तन्यस्तचूता-
ङ्कुरास्त्रः=सखिवसन्तकराऽर्पितरसालङ्कुरायुधः, प्राञ्जलिः=कृताञ्जलिः सन्, शत-
मखं=शतमन्युम्, इन्द्रमित्यर्थः, उपतस्थे=सङ्गतवान् ।

**व्युत्पत्तिः**—पुष्पधन्वा=पुष्पं धनुर्यस्य सः पुष्पधन्वा, "वा संज्ञायाम्"
इति समासान्तः अनङ्, "सर्वनामस्थाने चाऽसम्बुद्धौ" इति दीर्घः । "पुष्पधन्वा

रतिपतिर्मकरध्वज आत्मभूः" इत्यमरः । ललितयोषिद्भ्रूलताचारुशृङ्ग= चासौ योषित् ललितयोषित्, "विशेषणं विशेष्येण बहुलम्" इति समा "तत्पुरुषः समानाधिकरणः कर्मधारयः" इति कर्मधारयसंज्ञा । ततः " धारयजातीयदेशीयेषु" इति पूर्वपदस्य पुंवद्भावः । "ललितं त्रिषु सुन्दर "स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः" इत्यप्यमरः । भ्रुवौ एव लते "वल्ली तु व्रततिर्लता" इत्यमरः । ललितयोषितः भ्रूलते ललितयोषिद्भ्रूलते, चारुणी ललितयोषिद्भ्रूलताचारुणी, "उपमानानि सामान्यवचनैः" इति "सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्" इत्यमरः । ललितयोषिद्भ्रूलता शृङ्गे=कोटी, यस्य तत् ललितयोषिद्भ्रूलताचारुशृङ्गं, तत् । चापम्=" स्त्रियौ । धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्" इत्यमरः । सहचर यस्तचूताङ्कुरास्त्रः=सह चरतीति सहचरः, "चरगतिभक्षणयोः" इति श्चरेष्टः" इति टप्रत्ययः । सहचरश्चासौ मधुः सहचरमधुः, "मधु द्वे क्षीरे मद्ये पुष्परसे मधुः । दैत्ये चैत्रे वसन्ते च जीवशोके मधुद्रुमे" इति सहचरमधोः हस्तः सहचरमधुहस्तः, तस्मिन् न्यस्तं, सहचरमधुहस्त चूतस्य अङ्कुरः चूताङ्कुरः, "आम्रश्चूतो रसालोऽसौ" इत्यमरः । चूताङ्कु ऽस्त्रं चूताङ्कुराऽस्त्रं, "मयूरव्यंसकादयश्च" इति समासः । सहचरमधुहस्त चूताऽङ्कुराऽस्त्रं यस्य सः सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः ! शतमखं=शतं यस्य सः शतमखः, तं शतमखं । "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः इत्यमरः । उपतस्थे=उपोपसर्गपूर्वकात् "ष्ठा गतिनिवृत्तौ" इति धातोः देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्" इति वार्तिकेन सङ्गतिक आत्मनेपदम् ।

अत्र स्वभावोक्तिरलङ्कारः, तल्लक्षणं यथा साहित्यदर्पणे—"स्वभावो हार्थस्वक्रियारूपवर्णनम्" इति । अत्र मालिनीवृत्तं, तल्लक्षणं यथा वृत्तर "ननमयययुतेयं मालिनी भोगिलोकैः" इति ।

**भावार्थः**—महेन्द्रस्मरणानन्तरमेव स मदनः सुन्दरस्त्रीभ्रुकुटि स्वधनू रतिवलयप्रतिबिम्बलाञ्छिते स्वकण्ठे संवेष्ट्य, त्रैलोक्यविजयसहाय न्तस्य करे चूतकुसुमबाणं च संन्यस्य, कृताञ्जलिर्भूत्वा शतक्रतुं सङ्गामेति

**भाषा**—इन्द्र के स्मरण करते ही कामदेव सुन्दर स्त्रीयों के भ्रुकुटि कोमल धनुष्य को रतिकङ्कण से चिह्नित स्वकीय कण्ठ में लटका कर, तीनों

विजयमें सहायता करने वाले मित्र वसन्त के हाथ में आम्रकुसुमरूप स्वकीय
को देकर, हाथ जोड़ के इन्द्रके सन्मुख खडा होगया ।

इति श्रीभारद्वाजगङ्गाधरशास्त्रिविरचितया पुंसवनीसमाख्यया व्याख्यया समेतः
श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये ब्रह्मसाक्षात्कारो नाम
द्वितीयः सर्गः समाप्तः ।

---

## अथ तृतीयः सर्गः ।

कामदेवागमनानन्तरमिन्द्रस्य तद्विषयां प्रतिपत्तिमाह—

**तस्मिन्मघोनस्त्रिदशान्विहाय, सहस्रमक्ष्णां युगपत्पपात ।**
**प्रयोजनापेक्षितया प्रभूणां प्रायश्चलं गौरवमाश्रितेषु ॥ १ ॥**

सहस्राक्ष-दृग सुरत्याग कर रति-नाथ पर यकदम पड़े ।
प्रभु आश्रितों में स्वार्थ के हित चपल होते हैं बड़े ॥

अन्वयः—मघोनः अक्ष्णां सहस्रं त्रिदशान् विहाय तस्मिन् युगपत् पपात ।
प्रभूणाम् आश्रितेषु गौरवं प्रयोजनापेक्षितया चलं भवति ।

व्याख्या—मघोनः = इन्द्रस्य, अक्ष्णां=नेत्राणां, सहस्रं=दशशती,त्रिद-
=देवान्, विहाय = त्यक्त्वा, तस्मिन् = कामे, युगपत् = एकदैव, पपात=
तवान् । प्रायः=प्रायेण, प्रभूणाम्=अधिपानाम् , आश्रितेषु सेवकेषु, विष-
गौरवम्=आदरः, प्रयोजनाऽपेक्षितया = कार्यार्थित्वेन हेतुना, चलं=चञ्चलं,
तीति शेषः ।

व्युत्पत्तिः-मघोनः=“श्वयुवमघोनामतद्धिते” इति सम्प्रसारणम् । अक्ष्णा-
“अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः”इत्यनङ् । “ईक्षणं चक्षुरक्षिणी”इत्यमरः
शान् = तिस्रः =जन्मसत्ताविनाशाख्याः, दशाः = अवस्थाः, येषां ते त्रिदशाः,
त्रिदशान् , “सङ्ख्ययाऽव्ययासन्नादूराऽधिकसङ्ख्याः सङ्ख्येये” इति बहुव्रीहिः,
व्रीहौ सङ्ख्येये डजबहुगणात् इति डच्प्रत्ययः । उक्तार्थत्वात् सुचो निवृत्तिः ।
दशा विबुधाः सुराः” इत्यमरः । प्रभूणां =“प्रभुः परिवृढोऽधिपः” इत्यमरः ।
श्रितेषु=अत्र कर्तरि क्तप्रत्ययः । इयं वैषयकी सप्तमी । गौरवं=गुरोर्भावः गौर-
। प्रयोजनापेक्षितया = प्रयोजनम् अपेक्षते तच्छीलः प्रयोजनापेक्षी, णिनि

प्रत्ययः । प्रयोजनापेक्षिणो भावः प्रयोजनापेक्षिता,तया प्रयोजनापेक्षितया।
चलतीति चलम् ।

अत्र युगपत् सहस्रनेत्रावलोकनेन कामदेवे महेन्द्रस्यादरातिशयोक्ति
सकलान् देवाननादृत्य सबहुमानं कामदेवावलोकनस्योत्तरवाक्येन सम
न्तरन्यासोऽलङ्कारः । कार्यापेक्षितया परिजनेषु गौरवस्य चलत्वप्रतिपाद
न्द्रस्य धीरोद्धतनायकत्वं च द्योत्यते ।

भावार्थः—पूर्वं मन्त्राय समासीनानखिलान् देवाननादृत्य मरुत्वा
सहस्रेण तत्कालसमागतं कामदेवमेव सबहुमानमवलोकितवान्, यस्मा
प्रयोजनापेक्षिणस्तमादाश्रितविषयस्तेषामादरः प्रायेण तत्तदर्थसाधकेषु
चञ्चलो भवतीत्यर्थः ।

भाषा—तारकासुर के मारने के उपाय की सलाह के लिये बैठे हु
देवताओं के तरफसे दृष्टि हटाकर, इन्द्रने एकसाथ अपने हजारनेत्रों से
कामदेव के तरफ सन्मान पूर्वक देखा, क्योंकि मालिक लोग अपने
होते हैं, इसलिये सेवक विषयक उनका आदर उन उन कामों को
आश्रित मनुष्यों पर बहुधा अस्थिर रहा करता है ।

अथ वाचिकसम्भावनाप्रदर्शनपुरस्सरं मन्मथस्य वचनावसरमाह—

**स वासवेनासनसंनिकृष्टमितो निषीदेति विसृष्टभूमिः ।**
**भर्तुः प्रसादं प्रतिनन्द्य मूर्ध्ना, वक्तुं मिथः प्राक्रमतैवमे**

आसन दिया नज़दीक उसको इन्द्र ने सुविचार कर ।
उसने कहा इस तरह वासव को कृपा स्वीकार कर ॥

अन्वयः—सः वासवेन आसनसंनिकृष्टम् इतः निषीद इति
सन् भर्तुः प्रसादं मूर्ध्ना प्रतिनन्द्य मिथः एनम् एवं वक्तुं प्राक्रमत ।

व्याख्या—सः=कामदेवः, वासवेन = इन्द्रेण, आसनसंनिकृष्टं
संनिहितं यथा स्यात्तथा, इतः = इह, निषीद इति = उपविश इति, वि
दत्तस्थानः सन्, भर्तुः = स्वामिनः, इन्द्रस्येत्यर्थः प्रसादम् = अनुग्र
शिरसा, प्रतिनन्द्य = सम्भाव्य, मिथः = परस्परम् रहसि वा, एनम्
एवं = वक्ष्यमाणप्रकारेण, वक्तुं = कथयितुं, प्राक्रमत=उपक्रान्तवान् ।

व्युत्पत्तिः—वासवेन="वासवो वृत्रहा वृषा" इत्यमरः । आ
ष्टम् = सन्निकृष्टम् आसनं यथा स्यात् तथा आसनसन्निकृष्टम्, आ

ठात् साधुत्वम् । 'न पुनरत्रासनस्य सन्निकृष्टमिति समासः, "न लोकाव्यय-ष्ठाखलर्थतृनाम्" इति षष्ठीनिषेधात् । निषीद=न्युपसर्गपूर्वकात् "षद्लृ विश-रणगत्यवसादनेषु" इति धातोर्लोट् । "सदिरप्रतेः" इति षत्वम् । विसृष्टभूमिः = सृष्टा भूमिः यस्मै सः विसृष्टभूमिः, "भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा धरा" इत्यमरः । भर्तुः=बिभर्तीति भर्त्ता, तस्य भर्तुः । मूर्ध्ना = "अल्लोपोऽनः" ते अल्लोपः, "उत्तमाऽङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः । थः = "मिथोऽन्योन्यं रहस्यपि" इत्यमरः । एनं = "द्वितीयाटौस्स्वेनः" इति शब्दस्य एनादेशः । प्राक्रमत = "प्रोपाभ्यां समर्थाभ्याम्" इत्यात्मनेपदम् ।

**भावार्थः**—महेन्द्रेणास्मिन्प्रदेशे स्थितिं कुर्विति हस्तेन निर्दिश्य सन्निकटासनं ग स्यात्तथाऽऽदरेण दत्तावस्थानप्रदेशः स कामः स्वामिनः सन्मानं नम्रेण रसाऽभिनन्द्य रहसि महेन्द्रं वक्तुमुपक्रान्तवानिति भावः ।

**भाषा**—"यहां हमारे समीप बैठो" इस प्रकार हाथ के इशारे से इन्द्र ने मदेव को अपने समीप आसन पर आदर से बैठाया, तब कामदेव ने मालिकके दर का नम्र मस्तक से अभिनन्दन कर, एकान्त मे इन्द्र से इस तरह कहने का रम्भ किया ।

अथाष्टभिः श्लोकैः कामदेवस्य वक्ष्यमाणप्रकारेण प्रतिपादनमेव प्रपञ्चयति—

**आज्ञापय ज्ञातविशेष ! पुंसां लोकेषु यत्ते करणीयमस्ति ।**
**अनुग्रहं संस्मरणप्रवृत्तमिच्छामि संवर्द्धितमाज्ञया ते ॥ ३ ॥**

तत्त्वज्ञ प्रभु बतलाइये इच्छा हुई क्या आप की ।
आदेश से उन्नत कृपा को चहता हूँ आपकी ॥

**अन्वयः**—पुंसां ज्ञातविशेष ! आज्ञापय, लोकेषु ते यत् करणीयम् अस्ति । मरणप्रवृत्तं ते अनुग्रहम् आज्ञया संवर्द्धितम् इच्छामि ।

**व्याख्या**—हे पुंसां ज्ञातविशेष = हे पुरुषाणां ज्ञातसार, आज्ञापय = अनुज्ञां , लोकेषु = भुवनेषु, ते = तव, यत् , करणीयम् = कर्तव्यम् , अस्ति । संस्म-वृत्तं = संस्मृत्युत्पन्नं, ते = तव, अनुग्रहं = प्रसादम्, आज्ञया = अनुज्ञया, द्धितं = वृद्धिं गमितम् , इच्छामि = वाञ्छामि ।

**व्युत्पत्तिः**—पुंसां = पूञ्धातोः "पूञो डुम्सुन्" इति डुम्सुन्प्रत्ययः, डित्व-र्यात् अभस्याऽपि टेर्लोपः । "स्युः पुमासः पञ्चजनाः पुरुषाः पूरुषा नरः" मरः । ज्ञातविशेषः = ज्ञातः विशेषः येन स ज्ञातविशेषः, तत्सम्बुद्धौ हे ज्ञात

विशेषः ! सापेक्षत्वेऽपि गमकत्वात् समासः । लोकेषु = "लोकस्तु भुवने इत्यमरः । करणीयम् = कर्तुं योग्यं करणीयं "डुकृञ् करणे" इति धातोः "तव्यानीयरः" इति अनयीर् प्रत्ययः । संस्मरणप्रवृत्तं = सम्यक् स्मरणं सं गतिसमासः । संस्मरणेन प्रवृत्तः संस्मरणप्रवृत्तः, तं संस्मरणप्रवृत्तं, संव सम्यक् वर्द्धितः संवर्द्धितः, तं संवर्द्धितम् = वर्तमाने क्तः ।

अत्र पुंसां ज्ञातविशेष इत्यनेन आत्मन इतरेभ्य उत्कर्षो द्योतितः ।

भावार्थः—हे ज्ञातसकलपुरुषसामर्थ्यविशेष ! हे स्वामिन् ! लोके मया यत् कर्त्तव्यमस्ति, तदाज्ञापय, सर्वलोकाधिपतेस्तव योऽनुग्रहः सं मय्यङ्कुरितोऽभूत्, तमहमाज्ञया वर्द्धमानमिच्छामीति भावः ।

भाषा—हे सकल सेवक जनके सामर्थ्य को जानने वाले, मालिक ! लोक में जो कुछ आपका कार्य हो, उसे करने की मुझे आज्ञा दीजिये करने से मेरे विषयमें अङ्कुरित भया हुआ आपका अनुग्रह, आज्ञा से प करना चाहता हूँ ॥ ३ ॥

न च मे किञ्चिदसाध्यमस्तीत्याह—

**केनाऽभ्यसूया पदकाङ्क्षिणा ते, नितान्तदीर्घजनिता तपोभिः ।**
**यावद्भवत्याहितसायकस्य, मत्कार्मुकस्याऽस्य निदेशवर्त्ती ।**

भवदीय पदकी चाह से है कौन तप करता बड़ा ।
बतलाइये उसको प्रभो ! धनुवाण से दुख दूँ कड़ा ॥

**अन्वयः**—ते पदकाङ्क्षिणा केन नितान्तदीर्घैः तपोभिः अभ्यसूया तं ब्रूहि ! यतः स आहितसायकस्य अस्य मत्कार्मुकस्य निदेशवर्त्ती भवति ।

**व्याख्या**-ते = तव, पदकाङ्क्षिण = स्वर्गराज्यकामेन, केन = पुंसा, न्तदीर्घैः = अतिप्रभूतैः, तपोभिः = नियमैः, अभ्यसूया = ईर्ष्या, जनिता तं ब्रूहीति शेषोऽर्थः । सः = भवद्वैरी, आहितसायकस्य = संहितबाणस्य, पुरोवर्तिनः, मत्कार्मुकस्य = मद्धनुषः, निदेशवर्ती = आज्ञावशः, यावत् भविष्यति ।

**व्युत्पत्तिः**—पदकाङ्क्षिणा = पदं काङ्क्षतीति तच्छीलः पदकाङ्क्षी, ते ङ्क्षिणा, ताच्छील्ये णिनिप्रत्ययः । इन्द्रपदं प्रार्थयतेत्यर्थः । नितान्तदीर्घैः यथा स्तात्तथा दीर्घाणि नितान्तदीर्घाणि, तैः नितान्तदीर्घैः "तीव्रैकान्त

गाढबाढदृढानि च" इत्यमरः । आहितसायकस्य=आहितः सायकः यस्मिन् तत् आहितसायकं, तस्य आहितसायकस्य,="शरे खड्गे च सायकः" इत्यमरः । मत्कार्मुकस्य = कर्मणे प्रभवतीति कार्मुकं, "कर्मण उकञ्"इति उकञ्प्रत्ययः । "अथाऽस्त्रियौ । धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्" इत्यमरः । मम कार्मुकं मत्कार्मुकं, तस्य मत्कार्मुकस्य । उत्तरपदे कार्मुके परे "प्रत्ययोत्तरपदयोश्च" इति अस्मच्छब्दस्थाने मदादेशः । निदेशवर्ती=निदेशे वर्तते तच्छीलः निदेशवर्ती, निदेशोपपदपूर्वकात् "वृतु वर्तने" इति धातोः णिनिप्रत्ययः । "सौ च" इति दीर्घः । यावत् भवति=अविलम्बेनैव भविष्यतीत्यर्थः, "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् ।

**भावार्थः**—त्रैलोक्ये कः पुमान् बहुकालकृतैस्तपोभिस्त्वां दूरतो निराकृत्य स्वयमेवामरावतीमधिष्ठाय माहेन्द्रं पदमहमेवानुभवामीति कृतोद्योगस्तवासूयां जनयति, तं त्वरितं वद, यतः स पुमान सन्निहितबाणस्यास्य मद्धनुष आज्ञावशो भवतीति भावः ।

**भाषा**—घोर तपश्चर्या करके आप को हटाकर इन्द्रासन को चाहने वाले किस पुरुषने आपकी असूया की है, जल्दी उसका नाम बताइये, जिससे वह पुरुष हमारे धनुष्यबाण की आज्ञा के वशीभूत हो जाय ।

सम्प्रति चतुर्वर्गेषु मोक्षमधिकृत्य आह—

**असंमतः कस्तव मुक्तिमार्गं, पुनर्भवक्लेशभयात्प्रपन्नः ।**
**बद्धश्चिरं तिष्ठतु सुन्दरीणामारेचितभ्रूचतुरैः कटाक्षैः ॥५॥**

जो जन्म दुख से मुक्ति पथ पर चल रहा है कौन नर ।
उसको अभी प्रमदा-कटाक्षों से करूँ अति चपल तर ॥

**अन्वयः**—तव असंमतः कः पुनर्भवक्लेशभयात् मुक्तिमार्गं प्रपन्नः । तं वद । यतः सः आरेचितभ्रूचतुरैः सुन्दरीणां कटाक्षैः बद्धः सन् चिरं तिष्ठतु ।

**व्याख्या**—हे प्रभो ! तव=भवतः, असंमतः = अनभीष्टः, कः = पुमान्, पुनर्भवक्लेशभयात्=संसारकष्टभीतेः, मुक्तिमार्गं = मोक्षपथं, प्रपन्नः = प्राप्तः । तं वद, इति शेषः । यतः सः आरेचितभ्रूचतुरैः = नर्तितभ्रूरुचिरैः, सुन्दरीणां = रूपवतीनां, कटाक्षैः—अपाङ्गदर्शनैः, बद्धः = बन्धनं नीतः सन्, चिरम्=अधिककालपर्यन्तं, तिष्ठतु = तिष्ठेत् ।

**व्युत्पत्तिः**—असंमतः = नः संमतः असम्मतः । पुनर्भवक्लेशभयात्=पुन-

भवनं पुनर्भवः=पुनरुत्पत्तिः, संसार इति यावत् । पुनर्भवे क्लेशाः=जन्मम-
णादयः, पुनर्भवक्लेशाः, "आदीनवाश्रवौ क्लेशे" इत्यमरः । यद्वा "अवि-
स्मितारागद्वेषाऽभिनिवेशाः पञ्च क्लेशाः" इति पातञ्जलं योगदर्शनसूत्रम्।
र्भवक्लेशेभ्यः भयं पुनर्भवक्लेशभयं, "भीत्रार्थानां भयहेतुः" इत्यपादान-
"अपादाने पञ्चमी" इति पञ्चमी । तस्मात् पुनर्भवक्लेशभयात् , "विभाषा
ऽस्त्रियाम्" इति हेतौ पञ्चमी । आरेचितभ्रूचतुरैः=आरेचिताश्च=एकैकशो
चिताश्च ता भ्रुवः आरेचितभ्रुवः, ताभिः चतुराः आरेचितभ्रूचतुराः, तैः
चितभ्रूचतुरैः ।

आरेचितलक्षणं तु—

"स्याद्भ्रुवोर्ललिताक्षेपादेकस्या एव रेचितम् ।
तयोर्मूलसमुत्क्षेपं कौटिल्याद्भ्रूकुटिं विदुः" इति ॥

**भावार्थः**—तव सम्मतिं विनैव कः पुरुषः सांसारिकजन्मजरामरणादि
भयात् मोक्षपथं प्राप्तः । तं वद । यतः स त्वत्प्रसादपर्यन्तं सर्वावयवसुन्
कटाक्षविक्षेपादिविलासैर्वशीकृतः सन् चिरकालं तिष्ठत्विति भावः ।

**भाषा**—आपकी सम्मतिके विनाही कौन पुरुष सांसारिक जन्म मर
दुःख से भयभीत होकर मोक्ष मार्ग को प्राप्त हो रहा है, कहियें, जो की
कृपा होने तक सर्वाङ्गसुन्दरियों के कटाक्षविलासों से वशीभूत होकर चिर
तक बन्धन मे पडा रहें ।

धर्माऽर्थौ अधिकृत्य आह—

**अध्यापितस्योशनसाऽपि नी त प्रयुक्तरागप्रणिधिर्द्विषस्ते ।**
**कस्याऽर्थधर्मौ वद पीडयामि, सिन्धोस्तटावोघ इव प्रवृद्धः ॥**

धर्मार्थ को किसके विषय से पूर्ण कर दूँ इस तरह ।
करता प्रवाह नदी तटों को बाढ़ पीड़ित जिस तरह ॥

**अन्वयः**—उशनसा नीतिम् अध्यापितस्य अपि ते द्विषः कस्य अ
प्रयुक्तरागप्रणिधिः अहं प्रवृद्धः ओघः सिन्धोः तटौ इव पीडयामि, वद।

**व्याख्या**—उशनसा=शुक्रेण, नीतिं=नीतिशास्त्रम् , अध्यापितस्य अ
पाठितस्य अपि, ते=तव, द्विषः=शत्रोः, कस्य=पुरुषस्य, अर्थधर्मौ=अ
प्रयुक्तरागप्रणिधिः=प्रहितविषयाऽभिलाषदूतः, अहम् , प्रवृद्धः=अतिवृद्धि
ओघः=प्रवाहः, सिन्धोः=नद्याः, तटौ इव=तीरे इव, पीडयामि=बाधे। वद

**व्युत्पत्तिः**—उशनशा = "शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः" त्यमरः । अध्यापितस्य = णिजन्तात् अधिपूर्वात् द्विकर्मकात् "इङ् अध्ययने" ति धातोः प्रधाने कर्मणि क्तप्रत्ययः । "अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः" ति वचनात् । द्विषः=द्वेष्टीति द्विट् तस्य द्विषः, "द्विष अप्रीतौ" इति धातोः क्पप्रत्ययः, "द्विड्विपक्षाऽहिताऽमित्रदस्युशात्रवशत्रवः" इत्यमरः । अर्थधर्मौ = र्थश्च धर्मश्च अर्थधर्मौ, तौ "चाऽर्थे द्वन्द्वः" इति द्वन्द्वसमासः । प्रयुक्तरागप्रणि- धेः=राग एव प्रणिधिः रागप्रणिधिः, "प्रार्थने प्रणिधिश्चरे" इति यादवः । प्रयु- क्तः रागप्रणिधिः येन सः प्रयुक्तरागप्रणिधिः । प्रवृद्धः="वृधु वृद्धौ" इति धातोः क्तप्रत्ययेन वृद्धपदसिद्धिः । प्रकर्षेण वृद्धः प्रवृद्धः, "सह सुपा" इति समासः । सिं- धोः="देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्" इत्यमरः । तटौ="कूलं रोधश्च तीरं च प्रतीरं तटं त्रिषु" इत्यमरः ।

**भावार्थः**—प्रहितविषयाभिलाषदूतोऽहं "वर्षाकाले महतीं वृद्धिं प्राप्तो नदी- वेगो नद्यास्तीरप्रदेशाविव" भार्गवेण स्वयं शिक्षितनीतिशास्त्रस्यापि तव शत्रुभूतस्य कस्य धर्मार्थौ विनाशयेयं कथयेति भावः ।

**भाषा**—वर्षा काल में बढ़ा हुवा नदी का वेग जैसे दोनों तरफ के तटों का नाश करता है, उसी तरह मैं प्रवृद्धविषयवासनारूपी दूतको भेजकर साक्षात् शुक्राचार्य से भी नीतिशास्त्र के ज्ञान को पाने वाले आपके किस शत्रुका धर्म और अर्थ दोनों का नाश करदूं । कहिये ।

काममधिकृत्य आह—

**कामेकपत्नीव्रतदुःखशीलां, लोलं मनश्चारुतया प्रविष्टाम् ।**
**नितम्बिनीमिच्छसि मुक्तलज्जां कण्ठे स्वयंग्राहनिषक्तबाहुम् ॥७॥**

सुन्दर सती है कौन जिसको चाहते बतलाइये ।
निर्लज्ज चपल उसे बनादूं कण्ठ से लगजाइये ॥

**अन्वयः**—एकपत्नीव्रतदुःखशीलां चारुतया लोलं मनः प्रविष्टां कां नित- म्बिनीं मुक्तलज्जां सती कण्ठे स्वयंग्राहनिषक्तबाहुम् इच्छसि ।

**व्याख्या**—एकपत्नीव्रतदुःखशीलां=पातिव्रत्यदुःखस्वभावां, दृढव्रतामित्यर्थः, चारुतया = सुन्दरत्वेन हेतुना, लोलं=चञ्चलं, मनः = चित्तं, त्वदीयमित्यर्थः । प्रविष्टां = प्रवेशं कृतवतीं, कां, नितम्बिनीं=वारारोहां, मुक्तलज्जां=त्यक्तत्रपां सतीं, कण्ठे=गले, स्वयंग्राहनिषक्तबाहूम्=आत्मग्राहस्थापितभुजाम्, इच्छसि=वाञ्छसि ।

**व्युत्पत्तिः**—एकपत्नीव्रतदुःखशीलाम्=एकः पतिर्यस्याः सा एकपत्नी व्रता, "नित्यं सपत्न्यादिषु" इति ङीप् नकारादेशश्च । एकपत्न्याः व्रतं=पुरु दर्शनादिरूपम्, एकपत्नीव्रतम् । दुःखं शीलं यस्याः सा दुःखशीला, "पीडा व्यथा दुःखम्" "इति, "शीलं स्वभावे सद्वृत्ते" इति चाऽमरः । एकप दुःखशीला एकपत्नीव्रतदुःखशीला, ताम् एकपत्नीव्रतदुःखशीलां । चा चारुता, तया चारुतया, 'हेतौ" इति तृतीया । "सुन्दरं रुचिरं चारु सुषमं शोभनम्" इत्यमरः । लोलं="चलनं कम्पनं कम्प्रं चलं लोलं चला इत्यमरः । नितम्बिनीं=प्रशस्तः नितम्बः अस्ति यस्याः सा नितम्बिनी, ता म्बिनीम्, इनिप्रत्ययः तदन्तात् "ऋन्नेभ्यो ङीप" इति ङीप्प्रत्ययः । "प तम्बः स्त्री कटघाः" इत्यमरः । मुक्तलज्जां = मुक्ता लज्जा यया सा मुक्त तां मुक्तलज्जां "मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा" इत्यमरः । स्वयंग्राहनिषक्त 'स्वयं गृह्णातीति स्वयंग्राहा, "विभाषा ग्रहः" इति णप्रत्ययः, "न च जल ग्राह इति नियमः । जलचरे ग्राह एवेति नियमादिति" मल्लिनाथः । बाहू यस्याः सा निषक्तबाहुः, "भुजबाहू प्रवेष्टो दोः" इत्यमरः । स्वयंग्राह ऽसौ निषक्तबाहुः स्वयंग्राहनिषक्तबाहुः, तां स्वयंग्राहनिषक्तबाहुम् ।

अत्र रूपसौन्दर्याणां निरवधिकत्वाद्, मनसः स्वभावलौल्याद्, अ वृत्तान्तेन महेन्द्रस्य पारदारिकत्वाच्च न काचिदनुपपत्तिः । श्रुतिरप्याह हिल्यायै जार" इति ।

**भावार्थः**—हे महेन्द्र ! पतिव्रताव्रतदुःखस्वभावां सौन्दर्यातिशयेन (अ वत्) तव चञ्चलचित्तप्रविष्टां की सुन्दरीं मद्बाणभिन्नहृदयत्वेन परित्यक्त स्वयमेव कृतालिङ्गनां कारयितुमिच्छसीति वदेति भावः ।

**भाषा**—हे महेन्द्र ! पातिव्रतधर्म से क्रूर स्वभाव वाली, किन्तु सुन्द अहिल्या के समान आपके चञ्चल चित्त में धसी हुई, किस सुन्दरी स्त्री को हमा से पीडित होकर लज्जा छोड के खुद आकर आपके गले में आलिङ्गन चाहते हैं कहिये ? ।

"अथ नायिका त्रिभेदा स्वाऽन्या साधारणा स्त्रीति । तत्र परकीयां प्र इतरे प्रत्याहुः—

कयासि कामिन् ! सुरतापराधात्पादानतः कोपनयाऽवधूत तस्याः करिष्यामि दृढानुतापं प्रवालशय्याशरणं शरीरम् ॥

किस कोपना से हैं तिरस्कृत विफल कामुक चपल तर ।
तन कामज्वर पीड़ित बना, उसको सुला दूँ सेज पर ॥

**अन्वयः**—हे कामिन् ! सुरताऽपराधात् पादानतः सन् कोपतया कया अवधूतः असि, तस्याः शरी ं दृढाऽनुतापं प्रवालशय्याशरणं करिष्यामि ।

**व्याख्या**—हे कामिन् = हे कामुक, सुरताऽपराधात्=मैथुनाऽपराधात् अन्यासङ्गादित्यर्थः, पादानतः = प्रणतः सन्, कोपनया = क्रोधशीलया, कया = सुन्दर्या, अवधूतः असि = तिरस्कृतः असि । तस्याः = सुन्दर्याः, शरीरं = देहं, दृढाऽनुतापं = गाढपश्चात्तापम्, अत एव प्रवालशय्याशरणं = पल्लवशयनीयरक्षकं, करिष्यामि = विधास्यामि ।

**व्युत्पत्तिः**—हे कामिन्=कामः अस्याऽस्तीति कामी, तत्सम्बुद्धौ हे कामिन्, इनि प्रत्ययः । "कन्दर्पो दर्पकोऽनङ्ग कामः पञ्चशरः स्मरः" इत्यमरः । सुरताऽपराधात् = रमणं रतं, "व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम्" इत्यमरः । शोभनं रतं सुरतं, तस्मिन् अपराधः = सपत्नीजननामग्रहणादिरूपः सुरताऽपराधः, तस्मात् सुरतापराधात्, हेतौ पञ्चमी । पादानतः = पादयोः आनतः पादानतः, "पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमरः । कोपनया=कुप्यतीति कोपना, तया कोपनया, "कोपना सैव भामिनी" इत्यमरः । शरीरं = शीर्यते यत्तत् शरीरं, "गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः" इत्यमरः । दृढानुतापं=दृढः अनुतापः यस्मिन् तत् दृढाऽनुतापं, तत् । "पश्चापोऽनुतापश्च विप्रतीसार इत्यपि" इत्यमरः । प्रवालशय्याशरणं=प्रवालानां शय्या प्रवालशय्या, प्रवालशय्या शरणं यस्य तत् प्रवालशय्याशरणं, तत् "शरणं गृहरक्षित्रोः" इत्यमरः । प्रवालशय्याशरणत्वमनुतापस्यानुभावः । अत्र पुरुषार्थप्रकरणे धर्मार्थमोक्षाणां प्रतिबन्धकत्वेनोक्तिः। कामस्य तु साधकत्वेनेत्यात्मनः स्वभावः प्रदर्शितः ।

**भावार्थः**—हे कामुक ! गोत्रस्खलनाद्यपराधेन चरणप्रणतोऽपि त्वं कोपशीलया कया निराकृतोऽसि, वद । तस्याः शरीरं कामज्वरसन्तापेन पल्लवास्तरणमात्रशरणं विधास्यामीति भावः ।

**भाषा**—हे कामुक ! सपत्नीनामग्रहणादि अपराध होने से क्रुद्ध होकर किस स्त्री ने चरणों में प्रणत होनेपर भी, आपका निराकरण कर दिया है, कहिये । मैं उस स्त्री के शरीर को कामज्वर के सन्ताप से पल्लवों के शीतल शयन पर पड़ा रहने वाला बना दूँगा ।

अथ शस्त्रसाध्यं शत्रुविजयमप्यहमेव करिष्यामीत्याह—

**प्रसीद विश्राम्यतु वीर ! वज्रं शरैर्मदीयैः कतमः सुराऽरिः**
**बिभेतु मोघीकृतबाहुवीर्यः, स्त्रीभ्योऽपि कोपस्फुरिताऽधराभ्यः ॥**

हों बहु प्रसन्न, न दुख करें, अब आप का पवि, सुख करे ।
है कौन सुर-अरि कम्पिताधर नायिका से जो डरे ॥

अन्वयः—हे वीर ! प्रसीद । वज्रं विश्राम्यतु । मदीयैः शरैः मोघीकृतबाहुवीर्यः कतमः सुराऽरिः कोपस्फुरिताऽधराभ्यः स्त्रीभ्यः अपि बिभेतु ॥

व्याख्या—हे वीर ! = हे विक्रान्त, हे पराक्रमिन् ! इत्यर्थः । प्र[सीद=] प्रसन्नो भव । वज्रं=कुलिशं, विश्राम्यतु=विश्रमं कुर्यात् । उदास्ताम् [...] मदीयैः=मत्सम्बन्धिभिः, ममेत्यर्थः । शरैः=बाणैः, मोघीकृतबाहुवीर्यः=[निष्फ]लीकृतभुजपराक्रमः, कतमः=दैत्यदानवराक्षसादिषु यः कश्चन, सुराऽरिः=[श]त्रुः, कोपस्फुरिताऽधराभ्यः=क्रोधस्फुरितोष्ठाभ्यः, स्त्रीभ्यः अपि=नारीभ्य[ः] [...] बिभेतु = बिभियात् ।

व्युत्पत्तिः—हे वीर="शूरो वीरश्च विक्रान्तः" इत्यमरः । वज्रं="[...] वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः" इत्यमरः । मदीयैः=मम इमे मदी[...] मदीयैः छप्रत्ययः । शरैः="कर्तृकरणयोस्तृतीया" इति करणे तृतीया । [...]तबाहुवीर्यः=अमोघं मोघं यथा सम्पद्यते तथा कृतं मोघीकृतं, [...] बाह्वोर्वीर्यं बाहुवीर्यम् । मोघीकृतं बाहुवीर्यं यस्य सः मोघीकृतबाहुवीर्यः, "[...]मन्यपदार्थे" इति बहुव्रीहिसमासः । कतमः=किंशब्दात् "वा बहूनां [...] प्रश्ने डतमच्" इति डतमच्प्रत्ययः । टेर्लोपः । सुराऽरिः = सुराणाम् अ[...]रिः । कोपस्फुरिताऽधराभ्यः = स्फुरितः अधरः यासां ताः स्फुरिताऽधराः, "[...]ऽधरौ तु रदनच्छदौ दशनवाससी" इत्यमरः । कोपेन हेतुना स्फुरिता[...] कोपस्फुरिताऽधराः, ताभ्यः कोपस्फुरिताधराभ्यः, "कोपक्रोधाऽमर्षरो[...] रुट्क्रुधौ स्त्रियौ" इत्यमरः । स्त्रीभ्यः="स्त्री योषिदबला योषा नारी सी[...] वधूः" इत्यमरः । अत्र "भीत्रार्थानां भयहेतुः" इत्यपादानत्वात् पञ्चमी । [...]तु="ञिभी भये" इति धातोर्लोट् । किमतः परं तव रिपूणां क्लीबत्वं [...]यिष्यामीत्यर्थः ।

भावार्थः—हे स्वामिन् ! मयि कृपां कुरु । तव वज्रं परिश्रमापनोदनार्थं

लं विश्रान्ति लभतां कतमो दैत्यो मदीयैः बाणैर्निष्फलीकृतभुजपराक्रमः सन् षेण चञ्चलाधरेभ्यः स्त्रीजनेभ्योऽपि विभेत्विति वदेति भावः ।

भाषा—हे स्वामिन् ! मेरे ऊपर दया कीजिये, आपका वज्र परिश्रम दूर करने लिये कुछ दिन विश्रान्ति करें, मेरे बाणों से जिसका बाहुबल नष्ट होगया, सा कौनसा दैत्य, क्रोध से चञ्चल ओष्ठ वाली नारी से भी डरजाय, बतलाइयें।

अथ विकत्थनोदीर्णदर्पस्तेषां मन्त्रमजानन्नपि दैवात् तदभिमते परमदुस्सा- ऽपि कार्ये स्वशक्त्युपन्यासं कुर्वन् कामः सर्वातिशायितामात्मनः प्रकटयति—

**तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।**
**कुर्यां हरस्याऽपि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥१०॥**

माधव सहायक कुसुम शर ले आपकी लेकर दया ।
क्षण में पिनाकी से विजय लूँगा पिनाकी और क्या ॥

**अन्वयः**—तव प्रसादात् कुसुमायुधोऽपि [ अहम् ] एकं मधुम् एव सहायं ब्ध्वा पिनाकपाणेः हरस्य अपि धैर्यच्युतिं कुर्याम् , अन्ये धन्विनः मम के ।

**व्याख्या—**हे प्रभो ! तव = भवतः, प्रसादात् = अनुग्राहत् , कुसुमाऽऽयु- ोऽपि = पुष्पाऽस्त्रोऽपि, अपिदुर्बलास्त्रोऽपीत्यर्थः, [ अहम् ], एकम् = एकाकिनं, धुम् एव = वसन्तम् एव, सहायम् = अनुचरं, लब्ध्वा = प्राप्य, पिनाकपाणेः = जगवहस्तस्य, हरस्य अपि = महादेवस्य अपि, धैर्यच्युतिं=धीरताहानिं, कुर्याम = तुं शक्नुयाम् , अन्ये = अपरे, धन्विनः = धनुर्धारिणः, मम, के=न केऽपीत्यर्थः ।

**व्युत्पत्तिः**—कुसुमायुधः=कुसुमानि आयुधं यस्य स कुसुमायुधः "आयुधं तु रणं शस्त्रमस्त्रम्" इत्यमरः । सहायम् = "अनुप्लवः सहायश्चाऽनुचरोऽभिसरः मः" इत्यमरः । पिनाकपाणेः = पिनाकः पाणौ यस्य सः पिनाकपाणिः, तस्य नाकपाणेः "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ" इति पाणिपदस्य परनिपातः, न्यथा "सप्तमी विशेषणे बहुव्रीहौ" इति पूर्वनिपातेन भवितव्यम् । "पिनाकोऽ- गवं धनुः" इत्यमरः । हरस्य = हरतीति हरः, तस्य हरस्य,

अत्र 'पिनाकपाणेः' इति पदस्य पौनरुक्त्यं न शङ्कनीयम् । "पिनाकपाणेः पि हरस्य धैर्यच्युतिं कुर्यामन्येषां का कथा" इत्यनेन स्वस्य उत्कर्षद्योतनात् नाकपाणिपदस्य साकूतविशेषणभूतस्य चारितार्थ्यं भवतीति बोध्यम् ।

"हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुराऽन्तकः" इत्यमरः । धैर्यच्युतिं = धीरस्य वः कर्म वा धैर्यम् , धीरशब्दात् "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति

ष्यञ्प्रत्ययः । धैर्यस्य च्युतिः । धैर्यच्युतिः, तां धैर्यच्युतिं, कुर्याम् = "शके च" इति शक्यार्थे लिङ् । धन्विनः = "धन्वी धनुष्मान्धानुष्को धनुर्धरः" इत्यमरः । के=कुत्सायां किंशब्दः "कुत्साप्रश्नवितर्केषु क्षेपे इष्यते" इति शाश्वतः ।

अत्र शिवेतरधन्विनां विजयस्य दण्डापूपिकान्यायेन सिद्धत्वप्र दर्थापत्तिरलङ्कारः । जयकारणानां प्रबलायुधादीनामभावेऽपि जयोत विभावनालङ्कारश्च । तयोर्लक्षणे यथा—

"दण्डापूपिकया न्यायादर्थागमोऽर्थापत्तिरिष्यते" इति ।

"विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते" इति च ।

**भावार्थः**—अत्यन्तदुर्बलसाधनोऽप्यहं केवलं वसन्तमेव सहायकं प्रभोस्तव सामर्थ्यात् प्रबलसाधनभूतपिनाकधरस्य चतुर्दशभुवनसंहर्तुरपि स्यापि धैर्यहानिं कर्तुं शक्नुयाम् । हरव्यतिरिक्ता अन्ये धनुष्मन्तो मम पु न केऽपीति भावः ।

**भाषा**—अत्यन्त दुर्बल साधन वाला भी मैं केवल मित्र वसन्त की से, हे प्रभु ! आपके प्रभावसे प्रबल साधन भूत पिनाक नामक धनुष्य करनेवाले और चौदहों भुवनों का संहार करने की तक़त रखने वाले श धैर्य का नाश करसकता हूं, तब दूसरे और धनुर्धारी मेरे सामने क्या ची

अथ निजाभिलषितमदनवचनेन लब्धाश्वासस्य महेन्द्रस्य प्रवृत्तिमाह—

**अथोरुदेशादवतार्य पादमाक्रान्तिसम्भावितपादपीठम् ।**
**सङ्कल्पितार्थे विवृतात्मशक्तिमाखण्डलः काममिदं बभाषे ॥**

उरु देश से तब इन्द्र आसन पर चरण रखने लगे ।
निज कार्य में लख योग्य स्मर को यों वचन कहने लगे ॥

**अन्वयः**—अथ आखण्डलः ऊरुदेशात् पादम् आक्रान्तिसम्भावि पीठम् यथा स्यात्तथा अवतार्य सङ्कल्पितार्थे विवृतात्मशक्तिं कामम् इदं

**व्याख्या**—अथ=हरविषयसामर्थ्यप्रतिपादनानन्तरम् , आखण्डलः ऊरुदेशात्=सक्थिप्रदेशात् , पादं=चरणम् , आक्रान्तिसम्भावितपाद आक्रमणसफलीकृतचरणपीठम् यथा स्यात्तथा, अवतार्य=अवतारणं कृ ल्पितार्थे =सङ्कल्पीकृतविषये, हरचित्ताकर्षणरूपे इत्यर्थः । विवृतात्म प्रकटीकृतस्वसामर्थ्यं, कामं=स्मरम् , इदं=वक्ष्यमाणं, बभाषे=जगाद ।

रतिद्वितीये = द्वयोः पूरणी द्वितीया, द्विशब्दात् "द्वेस्तीयः" इति तीय... रतिः द्वितीया यस्य स रतिद्वितीयः, तस्मिन् रतिद्वितीये। प्रपन्ने = प्रोपस... "पद गतौ" इति धातोः क्तप्रत्ययः, "रदाभ्यां निष्ठातो नः पूर्वस्य च ... नत्वम्। द्वन्द्वानि = "द्वन्द्वं कलहयुग्मयोः" इत्यमरः। काष्ठागतस्नेहरसा... काष्ठां गतः काष्ठागतः, "द्वितीया श्रिताऽतीतपतितगताऽत्यस्तप्राप्ताप... द्वितीयातत्पुरुषः। "काष्ठोत्कर्षे स्थितौ दिशि" इत्यमरः। स्नेहः एव ... रसः, "प्रेमा ना प्रियता हार्दं प्रेम स्नेहः" इत्यमरः। काष्ठागतश्चासौ ... काष्ठागतस्नेहरसः, तेन अनुविद्धः काष्ठागतस्नेहरसाऽनुविद्धः, तं काष्ठा... सानुविद्धं। क्रियया = क्रियते या सा क्रिया, तया क्रियया, "डुकृञ् कर... धातोः "कृञः श च" इति शप्रत्ययः, ततः "अजाद्यतष्टाप" इति टाप...

भावार्थः—सज्जीकृतपुष्पमयशरासने रतिसहिते कामे स्थाणवाश्र... सति स्थावराणि जङ्गमानि च मिथुनानि कामागमनवशात् पराकाष्ठा... सम्भोगेच्छां तत्प्रकाशकैरालिङ्गनादिकर्मभिः प्रकाशयामासुरिति भावः।

भाषा—शङ्कर के आश्रम में कुसुम मय धनुष्य बाणको लेकर ... साथ कामदेवका आगमन होने से स्थावर, जंगमात्मक सब तरह के ... अत्यन्त बढ़ी हुई सम्भोगकी इच्छा को परस्पर मे आलिङ्गनादिकर्म ... जाहिर करने लगे।

अथ भ्रमरमिथुनानां मृगमिथुनानां च भावप्रकाशनमाह—

**मधु द्विरेफः कुसुमैकपात्रे, पपौ प्रियां स्वामनुवर्तमानः।**
**शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः॥**

अलि मधुकरी ने पुष्प का रस एक बरतन में पिया।
मृग ने मृगी तन कामना मय सींग से सुजला दिया॥

अन्वयः—द्विरेफः कुसुमैकपात्रे मधु स्वां प्रियाम् अनुवर्तमानः ... कृष्णसारः च स्पर्शनिमीलिताक्षीं मृगीं शृङ्गेण अकण्डूयत॥

व्याख्या—द्विरेफः = भ्रमरः, कुसुमैकपात्रे = पुष्पैकचषके, मधु = ... स्वाम् = आत्मीयां, प्रियां = वल्लभां, भृङ्गीमित्यर्थः। अनुवर्तमानः = ... सन्, पपौ = पीतवान्, तत्पीतशेषं पपावित्यर्थः। कृष्णसारः = कृष्णमृ... अपि, स्पर्शनिमीलिताक्षीं = स्पर्शसुखमुकुलितनेत्राम्, मृगीं = हरिणीं, शृङ्गे... णेन, अकण्डूयत = कण्डूयितवान्। सहयानं कण्डूयनं च कामाभिप्राय...

व्युत्पत्तिः—द्विरेफः=द्वौ रेफौ=रकारौ यस्य स द्विरेफः । उपचारात्तद्-ऽपि द्विरेफ उच्यते । यथाह कैयटः—"शब्दधर्मेणाऽपि अर्थस्य व्यपदेशो यते, यथा भ्रमरशब्दस्य द्विरेफवत्वात् द्विरेफो भ्रमरः" इति । "द्विरेफपुष्पलि-भृङ्गषट्पदभ्रमराऽलयः" इत्यमरः । कुसुमैकपात्रे=एकं च तत् पात्रम् एक-त्रं । कुसुमम् एव एकपात्रं कुसुमैकपात्रं तस्मिन् कुसुमैकपात्रे, "स्त्रियः सुमनसः ष्पं प्रसूनं कुसुमं सुमम्" इत्यमरः । मधु="मधुमद्ये पुष्परसे" इति विश्वः । वां="स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्यमरः । प्रियां=णातीति प्रिया, तां प्रियां "प्रीञ् तर्पणे" इति धातोः कप्रत्ययः, अभीष्टेऽभी-सतं हृद्यं दयितं वल्लभं प्रियम्" इत्यमरः । अनुवर्तमानः अनुवर्तते इति अनुव-मानः "लटः शतृशानचावप्रथमाऽसमानाधिकरणे" इति शानच् प्रत्ययः, "आने क्" इति मुगागमः, । पपौ="पा पाने" इति धातोः लिट्, णलः "आत औ लः" इति औकारादेशः । कृष्णसारः=कृष्णश्चासौ सारश्च=शवलश्च, कृष्णसारः, वर्णो वर्णेन" इति समासः । "कृष्णे नीलाऽसितश्यामकालश्याममेचकाः" ति, "कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषः" इत्यप्यमरः । स्पर्शनिमीलिताक्षी=मीलिते अक्षिणी यस्याः सा निमीलिताक्षी, "अनेकमन्यपदार्थे" इति बहुव्रीहिः, बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति समासान्तः षच् प्रत्ययः। "षिद्गौरादि-भ्यश्च" इति ङीष् प्रत्ययः । स्पर्शेन हेतुना निमीलिताक्षी, स्पर्शनिमीलिताक्षी, तां र्शनिमीलिताक्षीम् । अत्राक्षिनिमीलनं स्पर्शसुखस्यानुभावः । शृङ्गेण="साध-तमं करणम्" इति शृङ्गशब्दस्य करणसंज्ञा, ततः "कर्तृकरणयोस्तृतीया" इति तीया । अकण्डूयत="कण्डूञ् गात्रविघर्षणे" इति धातोः "कण्ड्वादिभ्यो क्" इति यक् । ततः कर्तरि लङ् । अत्र स्वभावोक्तिरलङ्कारः ।

भावार्थः—आत्मीयां वल्लभां भ्रमरीमनुसरन् भ्रमरः पुष्पमये एकस्मिन् षके मधु पीतवान्, "नागरिका ह्येकस्मिन् एव पात्रे सम्भृतं म ˙ वल्लभां पाय-न्ति, तत्पीतशेषं स्वयं चानुपिबन्तीति लोकप्रसिद्धिरत्रानुसन्धेया" । कृष्णसारो गश्च स्पर्शसुखेन निमीलितनयनां स्वां वल्लभां मृगीं स्वेनैव विषाणेन कण्डूयना-भिरनुवर्तितवानिति भावः ।

भाषा—रसिक लोग एक ही प्याले में मदिरा को भरकर अपनी प्रिया के न करने पर बचा हुआ स्वयं पीते है, इसी तरह भ्रमर एक ही पुष्प में स्वकीय मरी का अनुसरण करता हुआ मधु का पान करने लगा । और कृष्णसार

नामक मृग स्पर्शजन्य सुखसे आंख मूंद कर खडी रहने वाली स्वकीय प्रि
की अपने सींग से खजवाता हुआ खुशामत करने लगा ।

गजमिथुनानां चक्रवाकमिथुनानां च भावप्रकाशनमाह—

**ददौ रसात्पङ्कजरेणुगन्धि, गजाय गण्डूषजलं करेणुः।**
**अर्धोपभुक्तेन बिसेन जायां सम्भावयामास रथाङ्गनामा॥३**

गज की प्रिया ने सुरभिमय गण्डूषजल गज को दिया।
उपभुक्त-अर्ध-मृणाल चकवा ने प्रिया को दे दिया॥

**अन्वयः**—रसात् करेणुः पङ्कजरेणुगन्धि गण्डूषजलं गजाय ददौ। र
नामा अर्धोपभुक्तेन बिसेन जायां सम्भावयामास ।

**व्याख्या**—रसात्=अतिरागात् हेतोः, करेणुः=हस्तिनी, पङ्कजरे
कमलपरागगन्धि, गण्डूषजलं = मुखान्तर्धृताम्बु, गजाय = हस्तिने, ददौ
वती । रथाङ्गनामा = चक्रवाकः, अर्धोपभुक्तेन = अर्धजग्धेन, बिसेन=मृ
जायां = भार्यां, चक्रवाकीमित्यर्थः । सम्भावयामास = संमानितवान्, 
शेषं ददावित्यर्थः ।

**व्युत्पत्तिः**—रसात्=हेतौ पञ्चमी, "शृङ्गारादौ विषे वीर्ये गुणे
रसः" इत्यमरः । करेणुः="करेणुरिभ्यां स्त्री नेभे" इत्यमरः । पङ्कजरे
पङ्कात् जायते इति पङ्कजं, "पङ्कोऽस्त्री शादकर्दमौ" इति कोषः । पङ्कज
पङ्कजरेणुः, तस्य गन्धः पङ्कजरेणुगन्धः, सः अस्याऽस्तीति पङ्कजरेणुगन्धि
गण्डूषजलं = गण्डूषस्य जलं गण्डूषजलं, तत् "आपः स्त्री भूम्नि वार्वा
कमलं जलम्" इत्यमरः । गजाय="मतङ्गजो गजो नागः कुञ्जरो वारण
इत्यमरः । "कर्मणा यमभिप्रैति स सम्प्रदानम्" इति गजस्य सम्प्रदानसं
चतुर्थी सम्प्रदाने इति चतुर्थी । ददौ="डुदाञ् दाने" इति धातोर्लिट् ।
नामा=रथस्य अङ्गं=चक्रं, रथाङ्गं, तत् नाम यस्य सः रथाऽङ्गनामा । "
श्चक्रवाको रथाऽङ्गाह्वयनामकः" इति "आख्याऽऽह्वे अभिधानं च नाम
नाम च" इत्यप्यमरः । अर्धोपभुक्तेन = अर्धं यथा स्यात्तथा उपभुक्तम
भुक्तं, तेन अर्धोपभुक्तेन । "अर्धं समेंऽशके" इत्यमरः । बिसेन="मृणाल
इत्यमरः । जायाम्="भार्या जयाऽथ पुं भूम्नि दाराः" इत्यमरः । संभाव
समुपसर्गपूर्वकात् णिजन्ताद् "भू सत्तायाम्" इति धातोर्लिट् ।

अत्र सर्वत्र रतेस्तिर्यग्गतत्वेन रसाभासः ।

**भावार्थः**—यथा कामिनी सुरभिलकुसुमादिसंस्कृतं मुखासवं कामिने ददाति, त् अतिरागात् करिणी कमलपरागसुगन्धयुक्तं मुखान्तर्गतजलं करिणे दत्त- ौ । चक्रवाकोऽपि मुखताम्बूलार्पणेनेवार्धजग्धेन मृणालेन प्रियतमां चक्रवाकीं मानितवानिति भावः ।

**भाषा**—जैसे कामिनी सुगन्धित पुष्पों से संस्कृत मद्य का मुखगण्डूष से मी को पान कराती है, इसी तरह अत्यन्त प्रेम से हथिनी कमलों के पराग से न्धित मधुर जल का अपनी सूंड से हाथी को पान कराने लगी । और चक्र क पक्षी भी कामियों के परस्पर में मुखताम्बूल के अर्पण के समान स्वयं धा चबा कर मृणाल दण्ड चक्रवाकी को खिलाने लगा ।

एवं हिमवच्छिखरवर्तिनां मृगपक्षिणां कामविकारमुक्त्वा सम्प्रति किम्पुरुषाणां मनोविकारमाह—

**गीतान्तरेषु श्रमवारिलेशैः किञ्चित्समुच्छ्वासितपत्रलेखम् ।**
**पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किंपुरुषश्चुचुम्बे ॥ ३८ ॥**

थी पत्र रेखा मलिन जल से मद्यमय किन्नर किया ।
प्रिय गान में प्रिय ने प्रिया के वदन का चुम्बन किया ॥

**अन्वयः**—किंपुरुषः गीतान्तरेषु श्रमवारिलेशैः किञ्चित्समुच्छ्वासितपत्रलेखं पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं चुचुम्बे ।

**व्याख्या**—किंपुरुषः = किंनरः, गीतान्तरेषु = गानमध्येषु, श्रमवारिलेशैः= नजलकणैः, स्वेदोदबिन्दुभिरित्यर्थः । किञ्चित्समुच्छ्वासितपत्रलेखम्=ईषद्विश्लेतपत्रावलि, पुष्पासवाघूर्णितनेत्रशोभि=पुष्पोद्भवमद्योद्भ्रान्तनयनद्योति, प्रिया- खं=वल्लभाननं, चुचुम्बे = चुचुम्ब ।

**व्युत्पत्तिः**—किंपुरुषः = "स्यात्किन्नरः किंपुरुषस्तुरङ्गवदनो मयु"रित्यमरः, तान्तरेषु=गीतानाम् अन्तराणि गीतान्तराणि, तेषु गीतान्तरेषु, "गीतं गान- मे समे" इति "अन्तरमवकाशाऽवधिपरिधानान्तर्धिभेदतादर्थ्ये" इत्यप्यमरः । मवारिलेशैः=श्रमस्य वारि श्रमवारि, "आपः स्त्री भूम्नि, वार्वारि सलिलं कमलं लम्" इत्यमरः । श्रमवारिणो लेशाः श्रमवारिलेशाः' तैः श्रमवारिलेशैः, "स्त्रियां त्रा त्रुटी पुंसि लवलेशकणाऽणवः" इत्यमरः । किञ्चित्समुच्छ्वासितपत्रलेखं= णां लेखाः पत्रलेखाः, किञ्चित् समुच्छ्वासिताः पत्रलेखाः यस्य तत् किञ्चित् मुच्छ्वासितपत्रलेखं, तत् । पुष्पासवाघूर्णितनेत्रशोभि=पुष्पाणाम् आसवः=

मद्यं, पुष्पासवः, पुष्पोद्भवमद्यमित्यर्थः । ईषत् घूर्णिते आघूर्णिते । आघूर्णिते पुष्पासवाघूर्णिते, ते च ते नेत्रे पुष्पासावाघूर्णितनेत्रे शोभते तच्छीलं पुष्पासवाघूर्णितनेत्रशोभि, तत्, "सुप्यजातौ च्छील्ये" इति णिनिप्रत्ययः । प्रियामुखं=प्रियायाः मुखं प्रियामुखं, तत्, स्ये वदनं तुण्डमाननं लपनं मुखम्" इत्यमरः । चुचुम्बे="चुवि इति धातोः "परोक्षे लिट्" इति लिट् "इदितो नुम् धातोः" इति नुम्

**भावार्थः**—किन्नरः अतीतानागतयोर्गानयोरन्तरालेषु गानश्रम जलकणैरीषदुच्छूनितपत्रभङ्गं माध्वीसुरोद्भ्रान्तनयनशोभं किन्नरीमुखं वानिति भावः ।

**भाषा**—किन्नर एक गाना समाप्त कर दूसरे गानेके आरम्भ के मध्य के परिश्रम से जायमान प्रस्वेद से कुछ मिटगये मकरिकादि पत्र रच और मद्यपान से लाल नेत्र की शोभा से युक्त, स्वप्रिया किन्नरी के चुम्बन करने लगा ।

अथ स्थावराणामपि मदनोन्मादं दर्शयति—

**पर्याप्तपुष्पस्तबकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः ।**
**लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥३९॥**

सुम गुच्छ कुच पल्लव अधर सुन्दर लता प्रमदा बनी ।
आश्लेष तरुवर ने किया, थी तरु भुजा शाखा घनी ॥

**अन्वयः**—तरवः अपि पर्याप्तपुष्पस्तबकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः लतावधूभ्यः विनम्रशाखाभुजबन्धनानि अवापुः ।

**व्याख्या**—तरवः अपि=स्थावरात्मकाः वृक्षा अपि, लिङ्गादेव पुं ज्यते । पर्याप्तपुष्पस्तबकस्तनाभ्यः=समग्रकुसुमगुच्छककुचाभ्यः, स्फुरत्प्रवालोष्ठम नोहराभ्यः=स्फुरत्पल्लवाऽधररुचिराभ्यः, लतावधूभ्यः, व्रततिनारीभ्यः, विनम्रशाखाभुजबन्धनानि=अवनतविटपबाहुबन्धनानि, अवापुः=प्रापुः वधूभिः वृक्षा आलिङ्गिता इत्यर्थः ।

**व्युत्पत्तिः**—तरवः="वृक्षो महीरुहः शाखी विटपी पादपस्तरुः" पर्याप्तपुष्पस्तबकस्तनाभ्यः=पुष्पाणां स्तबकाः पुष्पस्तबकाः, "स्याद् स्तबकः" इत्यमरः । पर्याप्ताश्च ते पुष्पस्तबकाः पर्याप्तपुष्पस्तबकाः, ते यासां ता पर्याप्तपुष्पस्तबकस्तनाः, ताभ्यः पर्याप्तपुष्पस्तबकस्तनाभ्यः ।

पसर्जनादसंयोगोपधात्" इति विकल्पान्न ङीष्। "स्तनौ कुचौ" इत्यमरः। रत्प्रवालोष्ठमनोहराभ्यः = स्फुरन्तश्च ते प्रवालाः स्फुरत्प्रवालाः, ते एव ओष्ठाः रत्प्रवालोष्ठाः, "ओत्वोष्ठयोः समासे वा" इति पररूपत्वम्। हरन्ति ताः हराः, ञ् हरणे" इति धातोः पचाद्यच्। मनसः हराः मनोहराः। स्फुरत्प्रवालोष्ठैः नोहराः स्फुरत्प्रवालोष्ठमनोहराः, ताभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः। लताव-ध्यः = लता एव वध्वः लतावध्वः, ताभ्यः लतावधूभ्यः, "वल्ली तु व्रततिर्लता" ति "स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः" इत्यप्यमरः। विनम्रशा-भुजबन्धनानि = विशेषेण नम्राः, विनम्राः, 'सुप्सुपा' इति समासः। विनम्राश्च शाखाः विनम्रशाखाः, ता एव भुजाः विनम्रशाखाभुजाः, तैः बन्धनानि विन-शाखाभुजबन्धनानि तानि।

एतच्च वृक्षलतानामपि चेतनत्वादुक्तम्। यथाऽऽह मनुः—

"अन्तः संज्ञा भवन्त्येते सुखदुःखसमन्विताः" (१-४९) इति।

सन्निहिते हि प्रियतमे वधूनां स्तनपूर्तिधरस्फुरणं च भवतीति कामशास्त्रप्र-द्धम्। अत्र रूपकाऽलङ्कारः।

भावार्थः—समग्रकुसुमगुच्छककुचाभ्यः कम्पमानपल्लवोष्ठचेतोहराभ्यो लता-एवाङ्गनाभ्यः सकाशात् स्थावरात्मका वृक्षा अपि विनम्रविटपभुजैरालिङ्गनानि लवन्तः। स्थावराणामपि मदनविकारोऽभूत्किमुतान्येषामिति भावः।

भाषा—कुसुमगुच्छक रूपी स्तनों से परिपूर्ण और हिलने वाले पल्लव रूपी ओष्ठों से मनोहारिणी लता रूपी कामिनीयों से स्थावर वृक्ष रूपी कामुक पुरुष फैली हुई शाखा रूपी भुजा के द्वारा आलिङ्गन को प्राप्त करने लगे। अर्थात् वृक्षादि स्थावर पदार्थों को भी काम विकार उत्पन्न होगया, तब दूसरे प्राणियों अवस्था का क्या कहना है।

अथ यथावसरमाधिकारिकं वृत्तमवतारयति—

**श्रुताऽप्सरोगीतिरपि क्षणेऽस्मिन्, हरः प्रसंख्यानपरो बभूव।**
**आत्मेश्वराणां न हि जातु विघ्नाः, समाधिभेदप्रभवो भवन्ति ॥४०॥**

सुन अप्सरा-गण गान शंकर योग में तत्पर हुए।
क्या योगि-मन को जीतने में विघ्न बलवत्तर हुए॥

अन्वयः—अस्मिन् क्षणे हरः श्रुताऽप्सरोगीतिः अपि प्रसंख्यानपरः बभूव। आत्मेश्वराणां विघ्नाः जातु समाधिभेदप्रभवः न भवन्ति।

**व्याख्या**—अस्मिन् क्षणे=अस्मिन् अवसरे, वसन्तप्रादुर्भावसमये
हरः=महादेवः, श्रुताऽप्सरोगीतिरपि = आकर्णितस्ववेंश्यागानोऽपि,
गानं शृण्वन्नपीत्यर्थः । प्रसंख्यानपरः = आत्माऽनुसन्धानतत्परः,
हि यतः, आत्मेश्वराणां=स्ववशमनसां, जितेन्द्रियाणामित्यर्थः ।
प्रत्यूहा, जातु=कदाचिदपि, समाधिभेदप्रभवः=चित्तैकाग्र्यभञ्जनसमर्थाः

**व्युत्पत्तिः**—क्षणे="निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः"
मरः । श्रुताऽप्सरोगीतिः = अप्सरसां गीतिः अप्सरोगीतिः, "स्त्रियां
स्ववेंश्या उर्वशीमुखाः" इत्यमरः । श्रुता अप्सरोगीतिर्येन सः श्रुताप्सरोगीतिः
प्रसंख्यानपरः = प्रसंख्याने परः प्रसंख्यापरः, आत्मेश्वराणाम्=आत्मनः
आत्मेश्वराः, तेषाम् आत्मेश्वराणां, "स्वामी त्वीश्वरः पतिरीशिता"
विघ्नाः=विहन्यन्ते मनोरथाः एभिः इति विघ्नाः, घञर्थे कप्रत्ययः ।
रायः प्रत्यूहः" इत्यमरः । जातु = "कदाचिज्जातु" इत्यमरः । समाधि
समाधेर्भेदः समाधिभेदः, तस्मिन् प्रभवः समाधिभेदप्रभवः ।

अत्र पूर्वार्धस्योत्तरार्धेन समर्थनादर्थान्तरन्यासालङ्कारः ।

**भावार्थः**—एवं विधसकलचेतनवर्गमनःक्षोभकरे समयेऽपि हरोऽस्खलित-
चित्तवृत्तिः सन् परमात्मानुसन्धानात् किञ्चिदपि न विरराम । यस्मात् सकलक्षोभ-
भविधायिनोऽपि पदार्थाः कदाचिदपि धीराणां मनसः क्षोभं नोत्पादयन्ति ।

**भाषा**—इस प्रकार सकल चेतन प्राणियों के मन में काम वासना
करने वाले समय में भी शङ्कर भगवान् चित्तवृत्ति को अस्खलित रखकर
से जरा भी विरत नही हुए। क्योंकि दुनिया के चित्त में क्षोभ पैदा करने
पदार्थ धीर पुरुष के मन में थोड़ा भी क्षोभ उत्पन्न नहीं कर सकते है।

अथ हरप्रतिहारपदे वर्तमानस्य नन्दिकेश्वरस्य तत्कालोचितां प्रवृत्तिमाह

> लतागृहद्वारगतोऽथ नन्दी, वामप्रकोष्ठाऽर्पितहेमवेत्रः ।
> मुखाऽर्पितैकाङ्गुलिसंज्ञयैव मा चापलायेति गणान्व्यनैषीत्
>
> ले वाम कर में दण्ड नन्दी ने लता-गृह द्वार पर ।
> आकर कहा गण वृन्द से मन को सधिक चंचल न कर ॥

**अन्वयः**—अथ लतागृहद्वारगतः वामप्रकोष्ठाऽर्पितहेमवेत्रः नन्दी
ऽर्पितैकाङ्गुलिसंज्ञया एव गणान् "चापलाय मा भवत" इति व्यनैषीत् ॥

**व्याख्या**—अथ = सर्वभूतानामविनयवर्धनानन्तरं, लतागृहद्वारगतः

लयप्रतीहारस्थितः, वामप्रकोष्ठाऽर्पितहेमवेत्रः = दक्षिणेतरमणिबन्धन्यस्तसुवर्ण-
ड़ः, नन्दी = नन्दिकेश्वरः, मुखाऽर्पितैकाङ्गुलिसंज्ञया एव = आननधारित तर्ज-
सूचनया एव, गणान् = प्रमथान्, चापलाय=चाञ्चल्यं कर्तुं, मा=न भवत,
त = इत्थं, व्यनैषीत् = शिक्षितवान् ।

व्युत्पत्तिः—लतागृहद्वारगतः = लताभिः निर्मितं लतानिर्मितं, तत् गृहं
लतागृहं, "शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्" इति मध्यम-
लोपी समासः । "गृहं गेहोदवसिते वेश्म सद्म निकेतनम्" इत्यमरः । लता-
स्य द्वारं लतागृहद्वारं, "स्त्री द्वार्द्वारं प्रतीहारः" इत्यमरः । लतागृहद्वारं गतः
तागृहद्वारगतः, "द्वितीया श्रिताऽतीतपतितगताऽत्यस्तप्राप्तापन्नैः" इति समासः ।
मप्रकोष्ठाऽर्पितहेमवेत्रः = वामश्चासौ प्रकोष्ठः वामप्रकोष्ठः, हेम्नः वेत्रं हेमवेत्रम् ।
र्पितं हेमवत्रं येन सः अर्पितहेमवेत्रः । वामप्रकोष्ठे अर्पितहेमवेत्रः वामप्रकोष्ठा-
तहेमवेत्रः । नन्दी="शृङ्गी भृङ्गी रिटिस्तुण्डी नन्दिको नन्दिकेश्वरः" इत्यमरः ।
खाऽर्पितैकाङ्गुलिसंज्ञया = मुखे = वदने, अर्पिता सङ्कोधाश्चर्यस्तिमिताऽवलोकं
हिता, मुखाऽर्पिता । एका चाऽसौ आङ्गुलिः एकाङ्गुलिः । मुखाऽर्पिता चाऽसौ
काऽङ्गुलिः मुखार्पितैकाङ्गुलिः, तस्याः संज्ञा मुखाऽर्पितैकाङ्गुलिसंज्ञा, तया मुखाऽ-
तैकाङ्गुलिसंज्ञया । "संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चाऽर्थसूचना" इत्यमरः ।
णान्="सङ्घाते प्रमथे गणः" इत्यमरः । चापलाय = चपलस्य भावः चापलं,
स्मै चापलाय, चपलशब्दात् "हायनाऽन्तयुवादिभ्योऽण्" इत्यण् प्रत्ययः ।
क्रियार्थोपपदस्य कर्मणि स्थानिनः" इति चतुर्थी ।

भावार्थः—अथ सर्वभूतानामविनयवर्धनानन्तरं हरप्रतिहारपदे वर्तमानो
क्षिणेतरमणिबन्धन्यस्तसुवर्णदण्डो नन्दिकेश्वरो भूतगणान् चापलं कर्तुं मा भव-
ति नासारोपिततर्जनीसूचनयैव शिक्षितवानिति भावः ।

भाषा—सकल भूत पदार्थ के होने वाले अविनय भाव को देखकर शङ्करके
आश्रममें पहरे पर रहनेवाला, वामहस्तमें सोने के दण्डे को धारण करनेवाला
न्दिकेश्वर नामक गण, भूतगणों को चाञ्चल्य न करने के लिये "नाक पर
ङ्गुली रखकर" इशारे से ही मना करने लगा ।

अथ न केवलं गणा एव विनीताः, किन्तु जरायुजादिचतुर्विधं प्राणिजातम-
पीति नन्दिनः प्रभावातिशयमाह—

**निष्कम्पवृक्षं निभृतद्विरेफं, मूकाऽण्डजं शान्तमृगप्रचारम् ।**

**तच्छासनात्काननमेव सर्वं चित्राऽर्पितारम्भमिवाऽवतस्थे ।**

तरु भ्रमर प्रक्षी सर्प मृग गण एक दम चुप होगया ।
इससे अधिक मैं क्या कहूँ वन सकल निश्चल होगया ॥

**अन्वयः**—निष्कम्पवृक्षं निभृतद्विरेफं मूकाण्डजं शान्तमृगप्रचारं
काननं तच्छासनात् चित्राऽर्पितारम्भम् इव अवतस्थे ॥

**व्याख्या**—निष्कम्पवृक्षं=कम्परहितपादपम्, "इदमुद्भिज्जोपलक्षणम्"
द्विरेफं=निश्चलभ्रमरं "स्वेदजोपलक्षणमेतत्", मूकाण्डजं=निःशब्दपक्षि
"एतेन अण्डजजातिरुक्ता", शान्तमृगप्रचारं = निवृत्तपशुभ्रमणं "जरायु
णमेतत्", सर्वम् एव = सम्पूर्णम् एव, काननं = वनं, तच्छासानात्=
श्वराज्ञया, चित्राऽर्पितारम्भम् इव = आलेख्यलिखितारम्भम् इव, अ
स्थितवान् ।

**व्युत्पत्तिः**—निष्कम्पवृक्षं=निर्गतः कम्पः येभ्यस्ते निष्कम्पाः, "
कम्पः" इत्यमरः । निष्कम्पाः वृक्षाः यस्मिन् तत् निष्कम्पवृक्षं । निभृतं
रेफौ येषां ते द्विरेफाः । निभृताः द्विरेफाः यस्मिन् तत् निभृतद्विरेफं, मूक
अण्डात् जाताः अण्डजाः अण्डोपपदपूर्वकात् 'जनी प्रादुर्भावे' इ
"पञ्चम्यामजातौ' इति डप्रत्ययः । मूकाः अण्डजाः यस्मिन् तत् मूका
"अवाचि मूकः" इत्यमरः । शान्तमृगप्रचारं=मृगाणां प्रचारः मृ
"पशवोऽपि मृगाः" इत्यमरः । शान्तः मृगप्रचारः यस्मिन् तत् शान्त
काननम्="अटव्यरण्यं विपिनं गहनं काननं वनम्" इत्यमरः । तच्छास
शासनं तच्छासनं, तस्मात् तच्छासनात्, "अववादस्तु निर्देशो निदे
च सः । शिष्टिश्चाज्ञा च" इत्यमरः । चित्राऽर्पितारम्भम् = चित्रे अर्पित
पिंसः, सः, आरम्भः यस्मिन् तत् चित्रार्पितारम्भं । "प्रक्रमः स्यादुपक्र
दम्यादानमुद्धात आरम्भः" इत्यमरः । अवतस्थे=अवोपसर्गपूर्वकात् "
निवृत्तौ" इति धातोः लिट् । "समवप्रविभ्यः स्थः" इत्यात्मनेपदम् । "
जरायुजाः॥स्वेदजाः । कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः । उद्भिदस्तरु
इत्यमरः । तथा चोक्तं भोजराजेन—

"उद्भिजा वृक्षगुल्माद्याः पक्षिसर्पादयोऽण्डजाः ।
स्वेदजाः कृमिदंशाद्या नृमृगाद्या जरायुजाः ॥" इति ।

**भावार्थः**—स्थिरवृक्षं, निश्चलभ्रमरं, निश्शब्दपक्षिसङ्घं, त्यक्तभ्र

नीतोद्भिज्जाण्डजस्वेदजजरायुजप्राणिजातं तत् सम्पूर्णमेवारण्यं नन्दिकेश्वरशास-
त् चित्रलिखिताऽऽरम्भमिवावस्थितमासीदिति भावः ।

**भाषा**—नन्दिकेश्वर के इशारा करते ही आश्रम में वृक्ष स्थिर होगये, भ्रमर
श्चल होगये, पक्षि गण चुप होगये, और मृगोंने इधरसे उधर दौड़ना छोड़दिया,
स तरह उद्भिज, अण्डज, स्वेदज, और जरायुज सकल प्राणिसमूह चित्र में लि-
खत के समान स्थिर होगया ।

अथ प्रस्तुतं कामस्य हरसमाधिभङ्गव्यापारमेवानुसन्धत्ते—

**दृष्टिप्रपातं परिहृत्य तस्य, कामः पुरः शुक्रमिव प्रयाणे ।**
**प्रान्तेषु संसक्तनमेरुशाखं ध्यानास्पदं भूतपतेर्विवेश ॥ ४३ ॥**

**रतिनाथ सम्मुख शुक्र सम कर त्याग नन्दी दृष्टिका ।**
**शिव निकट आया तुरत करने अन्त अपनी सृष्टिका ॥**

**अन्वयः**—कामः प्रयाणे पुरःशुक्रं [ देशम् ] इव तस्य दृष्टिप्रपातं परिहृत्य
प्रान्तेषु संसक्तनमेरुशाखं भूतपतेः ध्यानास्पदं विवेश ।

**व्याख्या**—कामः = स्मरः, प्रयाणे=यात्रायां, पुरःशुक्रम् इव = सम्मुख-
भार्गवं [ देशम् ] इव, तस्य = नन्दिकेश्वरस्य, दृष्टिप्रपातं=दृग्विषयं, परिहृत्य =
त्यक्त्वा, प्रान्तेषु = पार्श्वदेशेषु, संसक्तनमेरुशाखं=लग्नसुरपुन्नागशाखं, भूतपतेः=
शिवस्य, ध्यानास्पदं = समाधिस्थानं, विवेश = प्रविष्टवान् ।

**व्युत्पत्तिः**—पुरःशुक्रं=पुरोगतः शुक्रः यस्मिन् [ देशे ] स पुरःशुक्रः, तं
पुरःशुक्रं । "शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कवि" इत्यमरः ।

प्रयाणे हि पुरश्शुक्रः प्रतिषिद्धो मुहूर्तशास्त्रे यथा—

"आग्नेयाद्यास्तारकाः साभिजित्का प्रागाद्याशासंस्थिताः सप्त सप्त ।
यस्यां तिष्ठेद् भार्गवो दिश्यमुष्यां-यात्रा पुंसां प्राणमानार्थहन्त्री॥" इति

दृष्टिप्रपातं = दृष्टीनां प्रपातः, दृष्टिप्रपातः, तं दृष्टिप्रपातं, "दृग्दृष्टी" इत्यमरः ।
परिहृत्य = पर्युपसर्गपूर्वकात् "हृञ् हरणे" इति धातोः क्त्वाप्रत्ययः, तस्य ल्यबा-
देशः । ततः "ह्रस्वस्य पिति कृति तुक्" इति तुगागमः । संसक्तनमेरुशाखं=नमे-
रूणां शाखाः नमेरुशाखाः, संसक्ताः नमेरुशाखाः यस्य तत् संसक्तनमेरुशाखं,
तत् । तिरोधानयोग्यमिति भावः, भूतपतेः=भूतानां पतिः भूतपतिः, तस्य भूतपतेः
"भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः" इत्यमरः । ध्यानाऽऽस्पदं = ध्यानस्य
आस्पदं ध्यानास्पदं, तत् "आस्पदं प्रतिष्ठायाम्" इति निपातः । विवेश="विश-

प्रवेशने" इति धातोर्लिट् ।

**भावार्थः**-कामदेवः यात्रायां पुरोभागस्थितशुक्रमिव नन्दिकेश्वरं परित्यज्य क्षितितलपर्यन्तनिरन्तराश्लिष्टसुरपुन्नागविटपं गिरीशस्य प्राविशदिति भावः ।

**भाषा**—कामदेव यात्रामें सन्मुख शुक्र के समान नन्दिकेश्वर के विषय का परित्याग कर "अर्थात् नन्दिकेश्वर की आंख बचा कर" वृक्षोंकी घनी झाड़ी से घिरे हुए शङ्करके समाधिस्थान में घुस गया।

कामदेवस्य शिवदर्शनप्रकारमाह—

**स देवदारुद्रुमवेदिकायां शार्दूलचर्मव्यवधानवत्याम्।**
**आसीनमासन्नशरीरपातस्त्रियम्बकं संयमिनं ददर्श ॥**

जिस पर बिछा हरि चर्म उस तरु सरल वेदी पर अचल।
आसीन देखा संयमी शिव को मनोभव ने अटल॥

**अन्वयः**—आसन्नशरीरपातः स शार्दूलचर्मव्यवधानवत्यां देवदारुद्रुमवेदिकायाम् आसीनं संयमिनं त्रियम्बकं ददर्श ॥

**व्याख्या**—आसन्नशरीरपातः = समीपदेहपातः, निकटवर्तिमृत्युः सः = कामः, शार्दूलचर्मव्यवधानवत्यां=व्याघ्रव्यवाययुक्तायां, व्याघ्रचर्मास्तीर्णामित्यर्थः। देवदारुद्रुमवेदिकायां=परिभद्रकवृक्षवेद्याम्, आसीनम्=उपविष्टं संयमिनं= ससंयमं, समाधिनिष्ठमित्यर्थः। त्रियम्बकं=त्रिनेत्रं, हरमित्यर्थः। ददर्श = ...

**व्युत्पत्तिः**—आसन्नशरीरपातः = शरीरस्य पातः शरीरपातः, "... संहननं शरीरं वर्ष्म विग्रहः" इत्यमरः। आसन्नः शरीरपातः यस्य सः आसन्न-शरीरपातः "समीपे निकटासन्नसंनिकृष्टसनीडवत्" इत्यमरः। शार्दूलचर्मव्यवधानवत्यां=शार्दूलस्य चर्म शार्दूलचर्म, "शार्दूलद्वीपिनौ व्याघ्रे" इति "... कृत्तिः स्त्री" इत्यप्यमरः। व्यवधानम् अस्ति यस्याः सा व्यवधानवती, ... तदन्तात् स्त्रीत्वविवक्षायाम् "उगितश्च" इति ङीप्प्रत्ययः ।।शार्दूलचर्मणा व्यवधानवती शार्दूलचर्मव्यवधानवती, तस्यां शार्दूलचर्मव्यवधानवत्यां, "... श्रीर्व्याघ्रचर्मणि" इति प्राशस्त्यादिति यावत् । देवदारुद्रुमवेदिकायां=देवदारुः ऽसौ द्रुमः देवदारुद्रुमः, "शक्रपादपः पारिभद्रकः । भद्रदारु द्रुकिलिमं ... च दारु च । पूतिकाष्ठं च सप्त स्युर्देवदारुणि" इत्यमरः। वेदिरेव वेदिका ... परिष्कृता भूमिः" इत्यमरः । देवदारुद्रुमस्य वेदिका देवदारुद्रुमवेदिका ...

दारुद्रुमवेदिकायां । संयमिनं = संयमः अस्याऽस्तीति संयमी, तं संयमिनम्, "अत इनिठनौ" इति इनिप्रत्ययः । त्रियम्बकं=त्रीणि अम्बकानि = नेत्राणि, यस्य स त्रियम्बकः, तं त्रियम्बकम् ।

अत्र त्र्यम्बकम् इत्यस्य वक्तव्यत्वे छान्दसप्रयोगाऽनुकरणं कृत्वा महाकविना इयङादेशविशिष्टं रूपमङ्गीकृतम् । तच्च अभियुक्तैरपि अभ्युपगतम् । तथा च भर्तृहरिः "त्रियम्बकं नान्यमुपस्थितासा" वति "त्र्यम्बकमित्युक्ते पादपूरणन्यासात् त्रियम्बकमिति पादपूरणार्थोऽयमियङादेशश्छान्दस" इति मल्लिनाथोक्तिस्तु नाऽऽदरणीया, "त्रिलोचनम्" इत्यनेनैव पादपूरणसद्भावात् ।

"हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुराऽन्तकः" इत्यमरः ।

अत्रानवसरोपस्थानेन कामदेवस्य शरीरनाशः कविना "आसन्नशरीरपातः" इति विशेषणेन सम्भावितः । अवसरोपस्थानेनानुग्रहः पुनः "तस्यानुमेने भगवान् विमन्युर्व्यापारमात्मन्यपि सायकानाम्" (७सं० ६७श्लो०) इत्यादिना वक्ष्यते इति न पूर्वापरस्वोक्तिविरोध इति बोध्यम् ।

**भावार्थः**—आसन्नमृत्युः स कामो व्याघ्रचर्माऽऽस्तृतायां देवदारुवृक्षमूलप्रदेशे शिलादिभिर्बद्धायां वेदिकायां समाधिनिष्ठं त्रिलोचनमवलोकयामासेति भावः ।

**भाषा**—मौत के मुख में पडे हुऐ कामदेव ने, देवदारु पेडके नीचे पत्थरसे बने चबुतरे पर व्याघ्रचर्म को बिछा के समाधिमें बैठे हुए शङ्कर को देखा ।

अथ तमेव देवं शिवं पञ्चभिः श्लोकैः वर्णयति, तत्र तपसामासनस्थैर्यमूलत्वादादावासनप्रकारमाह—

**पर्य्यङ्कबन्धस्थिरपूर्वकायमृज्वायतं सन्नमितोभयांसम् ।**
**उत्तानपाणिद्वयसन्निवेशात्, प्रफुल्लराजीवमिवाङ्कमध्ये ॥ ४५ ॥**

पर्य्यङ्क बन्ध मनोज्ञ तन ऋजु नमित अंस महान थे ।
उत्तान पाणि निवेश से विकसित सरोज समान थे ॥

**अन्वयः**—पर्यङ्कबन्धस्थिरपूर्वकायम् ऋज्वायतं सन्नमितोभयांसम् उत्तानपाणिद्वयसन्निवेशात् अङ्कमध्ये प्रफुल्लराजीवम् इव स्थितं ददर्शेति पूर्वेणान्वयः ।

**व्याख्या**—पर्यङ्कबन्धस्थिरपूर्वं कायं = वीराऽऽसननिश्चलपूर्वार्धम्, ऋज्वायतं=प्रगुणदीर्घं, सन्नमितोभयांऽसं=सन्नमितद्विस्कन्धम्, उत्तानपाणिद्वयसन्निवेशात्=ऊर्ध्वतलहस्तद्वयसंस्थानात्, अङ्कमध्ये=क्रोडमध्ये, प्रफुल्लराजीवम् इव=विकचकमलम् इव, स्थितं तं ददर्शेति पूर्वेणान्वयः ।

व्युत्पत्तिः—पर्यङ्कबन्धस्थिरपूर्वकायं = पर्यङ्कस्य बन्धः पर्यङ्क
कायस्य इति पूर्वकायः, "पूर्वाऽपराऽधरोत्तरमेकदेशिनैकाधिकरणे" इ
स्थिरः पूर्वकायः यस्य स स्थिरपूर्वकायः, पर्यङ्कबन्धेन स्थिरपूर्वकायः
स्थिरपूर्वकायः, तं पर्यङ्कबन्धस्थिरपूर्वकायं, "वीरासनबन्धनेन निश्चलश
मित्यर्थः । ऋज्वायतम् = ऋजुश्चाऽसौ आयतः ऋज्वायतः, तम् ऋ
"ऋजावजिह्मप्रगुणौ" इति "दीर्घमायतम्" इत्यप्यमरः । सन्नमितौ
सन्नमितौ उभौ अंसौ यस्य स सन्नमितोभयांऽसः तं सन्नमितोभयांसम्
विषये उभशब्दस्थाने उभयशब्दप्रयोगः" इत्युक्तं कैयटेन । "स्कन्धो
सोऽस्त्री" इत्यमरः । उत्तानपाणिद्वयसन्निवेशात् = द्वौ अवयवौ यस्य
पाण्योर्द्वयं पाणिद्वयम् । "पञ्चशाखः शयः पाणिः" इत्यमरः । पाणिद्व
वेशः पाणिद्वयसन्निवेशः । उत्तानश्चासौ पाणिद्वयसन्निवेशः उत्तानपा
वेशः, तस्मात् उत्तानपाणिद्वयसन्निवेशात् । अङ्कमध्ये=अङ्कस्य मध्यम्
तस्मिन् अङ्कमध्ये "उत्सङ्गचिह्नयोरङ्कः" । प्रफुल्लराजीवं=प्रफुल्लतीति
प्रोपसर्गपूर्वकात् "फुल्ल विकसने" इति धातोः पञ्चाद्यच् । प्रफुल्लोत्फु
व्याकोशविकचस्फुटाः । फुल्लश्चैते" इत्यमरः । प्रफुल्लं राजीवं यस्य
राजीवः, तं प्रफुल्लराजीवं, "बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च"
वीरासने वशिष्ठः—"एकं पादमथैकस्मिन्विन्यस्योरौ तु संस्थितम् ।
इतरस्मिंस्तथैवोरुं वीरासनमुदाहृतम् ॥" इति ।
तथा योगसारे—"उत्तानिते करतले करमुत्तानितं परम् ।
आदायाऽङ्कगतं कृत्वा ध्यायेद्यस्तस्य सोऽन्तरम् ॥" इति

भावार्थः—वीरासनेन निश्चलशरीरपूर्वार्धमवक्रायतोर्ध्वकायमत
त्तोभयस्कन्धमुत्तानयोः करतलयोरङ्कमध्येऽवस्थापितत्वादङ्कमध्ये प्रफुल्ल
दृश्यमानं हरं ददर्शेति भावः ।

भाषा—वीरासन से शरीर के पूर्व भाग को सीधा और स्थिर कर
कन्धों को नीचा कर, गोद में कमल के समान दोनों पञ्जों को उता
बैठे हुए शङ्कर को देखा ।

ध्यानोद्योगद्योतकमलङ्कारविशेषमाह—

भुजङ्गमोन्नद्धजटाकलापं कर्णावसक्तद्विगुणाक्षसूत्रम् ।
कण्ठप्रभासङ्गविशेषनीलां कृष्णत्वचं ग्रन्थिमतीं दधानम् ॥

जहि मय जटा श्रुति सूत्र मय गल कान्ति मिश्रण श्यामतम ।
धारण किये शिव लो त्रिलोका कृष्ण मृग के मृदु चरम ॥

**अन्वयः**—भुजङ्गमोन्नद्धजटाकलापं कर्णाऽवसक्तद्विगुणाक्षसूत्रं कण्ठप्रभासङ्गविशेषनीलां ग्रन्थिमतीं कृष्णत्वचं दधानं तं ददर्शेति पूर्वेणान्वयः ।

**व्याख्या**—भुजङ्गमोन्नद्धजटाकलापं=सर्पोद्बद्धसटासमूहं, कर्णाऽवसक्तद्विगुणाक्षसूत्रं=दक्षिणश्रवणनिक्षिप्तद्विरावृत्ताक्षमालम्, कण्ठप्रभासङ्गविशेषनीलां=गलकान्तिमिश्रणविशेषकृष्णां, ग्रन्थिमतीं = बन्धनयुक्तां, कृष्णत्वचं = कृष्णमृगचर्म, दधानं=धारयन्तं शिवं ददर्शेति पूर्वेणान्वयः ।

**व्युत्पत्तिः**—भुजङ्गमोन्नद्धजटाकलापं=भुजङ्गमेन = सर्पेण, उन्नद्धः=उन्नह्य बद्धः, भुजङ्गमोन्नद्धः उदुपसर्गपूर्वकात् "णह बन्धने" इति धातोः क्तप्रत्ययः । "सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः" इत्यमरः । जटानां कलापः जटाकलापः । "वृतिनस्तु जटा सटा" इति "कलापो भूषणे बर्हे तूणीरे संहतावपि" इत्यप्यमरः । भुजङ्गमोन्नद्धः जटाकलापः येन स भुजङ्गमोन्नद्धजटाकलापः, तं भुजङ्गमोन्नद्धजटाकलापं कर्णाऽवसक्तद्विगुणाऽक्षसूत्रं=कर्णे=दक्षिणकर्णे, अवसक्तं=स्थितं, कर्णावसक्तं, कर्णालम्बीत्यर्थः । द्वौ गुणौ=आवृत्ती, यस्य तत् द्विगुणम् । अक्षाणां सूत्रम् अक्षसूत्रम् । कर्णाऽवसक्तं [अत एव] द्विगुणम् अक्षसूत्रं, यस्य सः कर्णाऽवसक्तद्विगुणाक्षसूत्रः, तं कर्णाऽवसक्तद्विगुणाक्षसूत्रं, कण्ठप्रभासङ्गविशेषनीलां=कण्ठस्य प्रभाः कण्ठप्रभाः, "स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः" इत्यमरः । कण्ठप्रभाणां सङ्गः कण्ठप्रभासङ्गः । विशेषेण नीला विशेषनीला, "कृष्णो नीलाऽसितश्यामकालश्यामलमेचकाः" इत्यमरः । कण्ठप्रभासङ्गेन विशेषनीला कण्ठप्रभासङ्गविशेषनीला, तां कण्ठप्रभासङ्गविशेषनीलां, ग्रन्थिमतीं =ग्रन्थिः अस्या अस्तीति ग्रन्थिमती, तां ग्रन्थिमतीं, मतुप्प्रत्ययः तदन्ताङीप् । कृष्णत्वचं =कृष्णस्य =कृष्णसारस्य, त्वक् कृष्णत्वक्, तां कृष्णत्वचं, "नामैकदेशे नामग्रहणम्" इति न्यायात् कृष्णसारवाचकः ।

**भावार्थः**-सर्पोद्ग्रन्थितजटाजूटं दक्षिणकर्णावस्थितद्विरावृत्ताक्षमालं गलगलितहलतरंगरलप्रभाधिकश्यामलं निबिडग्रथितं मृगचर्म वसानं हरं ददर्शेति भावः।

**भाषा**—सर्प से जटा जूट को बांधे हुए, कान में रुद्राक्ष माला को दुहेरी लपेट कर, गलेके हलाहल की प्रभा से अत्यन्त काले दिखपड़ने वाले मृग चर्म को गांठ लगा कर धारण किये हुए शङ्कर को देखा ।

नेत्राणामपि योगानुगुणमवस्थानविशेषमाह—

किञ्चित्प्रकाशस्तिमितोग्रतारैर्भ्रूविक्रियायां विरतप्रसङ्गैः ।
नेत्रैरविस्पन्दितपक्ष्ममालैर्लक्ष्यीकृतघ्राणमधोमयूखैः ॥ ४९ ॥

कुछ दीप्त उग्र कनीनिका-मय पक्ष्म-पतन रहित अचल।
अपलक अधोमुख-किरण-दृग नासाग्र छूते थे अटल। ४९ ।

अन्वयः—किञ्चित्प्रकाशस्तिमितोग्रतारैः भ्रूविक्रियायां विरतप्रसङ्गैः अविस्प-
न्दितपक्ष्ममालैः अधोमयूखैः नेत्रैः लक्ष्यीकृतघ्राणं तं ददर्शेति पूर्वेणान्वयः।

व्याख्या—किञ्चित्प्रकाशस्तिमितोग्रतारैः = ईषत्प्रकाशनिश्चलरौद्र...
भ्रूविक्रियायां = भ्रूविक्षेपे, विरतप्रसङ्गैः = निवृत्ताऽवसरैः प्रसक्तरहितैः
अविस्पन्दितपक्ष्ममालैः = अचलितपक्ष्मपङ्क्तिभिः, अधोमयूखैः = निम्न...
रणैः, नेत्रैः = नयनैः, त्रिनेत्रत्वाद् बहुवचनम् , लक्ष्यीकृतघ्राणं = लक्ष्यी...
नासिकाऽग्रनिविष्टदृष्टिमित्यर्थः। तं शिवं ददर्शेति पूर्वेणान्वयः।

व्युत्पत्तिः—किञ्चित्प्रकाशस्तिमितोग्रतारैः = किञ्चित् यथा तथा ...
यासां ताः किञ्चित्प्रकाशाः, ताः स्तिमिताः उग्राः ताराः येषां तानि किञ्चि...
स्तिमितोग्रताराणि, तैः किञ्चित्प्रकाशस्तिमितोग्रतारैः। "भयङ्करं प्रति...
तूग्रममी त्रिषु" इति "तारकाऽक्ष्णः कनीनिका" इत्यप्यमरः। भ्रूविक्रियायां...
विक्रिया भ्रूविक्रिया, तस्यां भ्रूविक्रियायां। विरतप्रसङ्गैः = विरतः प्रसङ्गः...
तानि विरतप्रसङ्गानि, तैः विरतप्रसङ्गैः, "प्रसङ्गः स्यादवसरः" इत्यमरः। अवि...
स्पन्दितपक्ष्ममालैः = न विस्पन्दिता अविस्पन्दिता, पक्ष्मणां माला पक्ष्म...
अविस्पन्दिता पक्ष्ममाला येषां तानि अविस्पन्दितपक्ष्ममालानि, तैः अविस्पन्दि...
तपक्ष्ममालैः। अधोमयूखैः = अधः प्रसृता मयूखा येषां तानि अधोमयूखानि...
अधोमयूखैः, "किरणोस्रमयूखांऽशुगभस्तिघृणिघृष्णयः" इत्यमरः। नेत्रैः = नी...
विषयाः एभिः इति नेत्राणि, तैः नेत्रैः, "लोचनं नयनं नेत्रमीक्षणं चक्षु...
इत्यमरः। लक्ष्यीकृतघ्राणं = अलक्ष्यं लक्ष्यं यथा सम्पद्यते तथा कृतं लक्ष्यीकृतं...
च्विप्रत्ययः। लक्ष्यीकृतं घ्राणं येन स लक्ष्यीकृतघ्राणः, तं लक्ष्यीकृतघ्राणं...
घ्राणं गन्धवहा घोणा नासा च नासिका" इत्यमरः।

समाधौ नासाग्रदृष्टिरुक्ता योगसारे यथा—

"करणान्यबहिष्कृत्य स्थाणुवन्निश्चलात्मकः।
आत्मानं हृदये ध्यायेन्नासाग्रन्यस्तलोचनः॥" इति।

भावार्थः—ईषत्प्रकाशनिश्चलदुर्निरीक्ष्यकनीनिकैः भ्रूविकारनिवृत्तव्यापारैः स्तिमिताद्विरोमसमूहैः अधःप्रसृतकिरणैः त्रिभिरपि लोचनैः निरन्तरावलोक्यमान-नासिकाग्रं हरं ददर्शेति भावः ।

भाषा—चमकती हुई आंख की पुतलियों को स्थिर कर, पलक को न गिराते हुए नीचे की तरफ तेज को फैलाने वाली, तीनों आखों से नासिका के अग्रभाग को एकटक से देखने वाले शङ्कर को देखा ।

अथ योगाभ्यासयोग्यं प्राणादिवायूनां निरोधमुपमामुखेन दर्शयति—

**अवृष्टिसंरम्भमिवाऽम्बुवाहमपामिवाधारमनुत्तरङ्गम् ।**
**अन्तश्चराणां मरुतां निरोधान्निवातनिष्कम्पमिव प्रदीपम् ॥४८॥**

अतरङ्ग सलिलाशय सदृश वर्षारहित घन सम नये ।
निष्कम्प-दीप-समान प्राण-निरोध से हर हो गये ॥

अन्वयः—अन्तश्चराणां मरुतां निरोधात् अवृष्टिसंरम्भम् अम्बुवाहम् इव [ स्थितम् ], अनुत्तरङ्गम् अपाम् आधारम् इव [ स्थितम् ] निवातनिष्कम्पं प्रदीपम् इव [ स्थितम् ] तं ददर्शेति पूर्वश्लोकेनान्वयः ।

व्याख्या—अन्तश्चराणाम्=अभ्यन्तरगच्छतां, मरुतां=वायूनां, प्राणादीनामित्यर्थः। निरोधात्=प्रतिरोधात् हेतोः, अवृष्टिसंरम्भम्=अवर्षसम्भ्रमम्, वर्षोद्योगरहितमित्यर्थः । अम्बुवाहम् इव=वारिवाहम् इव, मेघमिवेत्यर्थः । [ स्थितम् ] "अनेनोपमानेन मरुतामधः प्रदेशप्रवृत्त्यभावः" सूचितः" । अनुत्तरङ्गम्=अभङ्गम्, अनुद्भूततरङ्गमित्यर्थः, अपां=जलानाम्, आधारम् = इव=आश्रयम् इव, ह्रदमिवेत्यर्थः । स्थितम् ] "अनेनोपमानेन मरुतामूर्ध्वप्रदेशप्रवृत्त्यभावः सूचितः" । निवातनिष्कम्पं = निर्वायुनिश्चलं, निर्वायुदेशनिश्चलमित्यर्थः । प्रदीपम् इव = दीपम् इव [स्थितम्] "अनेनोपमानेन मरुतां तिर्यक् प्रदेशप्रवृत्त्यभावः सूचितः"। अत्रापि तं ददर्शेति पूर्वश्लोकेनान्वयः ।

व्युत्पत्तिः—अन्तश्चराणाम्=अन्तश्चरन्तीति अन्तश्चराः, तेषाम् अन्तश्चराणां, "चरेष्टः" इति टप्रत्ययः । शरीरान्तर्वर्तिनामित्यर्थः । मरुतां = समीरमारुतमरुज्जगत्प्राणसमीरणाः" इत्यमरः । अवृष्टिसंरम्भम्=वृष्टेः संरम्भः वृष्टिसंरम्भः, अविद्यमानः वृष्टिसंरम्भः यस्य सः अवृष्टिसंरम्भः, तम् अवृष्टिसंरम्भं, "नञोऽस्यर्थानां वाच्यो वा चोत्तरपदलोपः" इति नञ्बहुव्रीहिः । अम्बुवाहम्= अम्बु वहतीति अम्बुवाहः, तम् अम्बुवाहं, "कर्मण्यण्" इति अण् प्रत्ययः ।

"अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः" इत्यमरः । अनुत्तरङ्गम्=अ… उत्तरङ्गः यस्य स अनुत्तरङ्गः, तम् अनुत्तरङ्गं । "भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रि… इत्यमरः। अपाम्="आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्" इत्य… वातनिष्कम्पं=निर्गतः वातः यस्मात् देशात् स निवातो देशः, "नभस्वा… पवमानप्रभञ्जनाः" इत्यमरः । निर्गतः कम्पः यस्मात् स निष्कम्पः, "… कम्पः" इत्यमरः । निवाते निष्कम्पः निवातनिष्कम्पः, तं निवा… प्रदीपम्=प्रकृष्टो दीपः प्रदीपः, तं प्रदीपम् । "निवातावाश्रयावातौ" …

अत्र मालोपमालङ्कारः । तल्लक्षणं यथा—

"मालोपमा यदेकस्योपमानं बहु-दृश्यते ॥" इति ।

**भावार्थः**—शरीरान्तर्वर्तिनां प्राणादिवायूनां नियमनात् वर्षोद्योग… मिव दृश्यमानम्, अनुद्वीचिजलाशयमिव दृश्यमानं, निर्वातदेशनिश्चल… दृश्यमानं, कुम्भितपवनत्वेन कुत्रापि पवनप्रवृत्त्यभावान्निश्चलशरीरमिति … ददर्शेति भावः ।

**भाषा**—शरीर के भीतर सञ्चरण करने वाले प्राणादि वायु का निय… से, वृष्टिव्यापार को नहीं करने वाले जलसे भरे मेघों के सामन, तरङ्ग… निश्चल जलाशयके समान, निर्वातप्रदेशमें स्थिर दीपक के समान, अर्थात्… वायुकी प्रवृत्ति न होने से शरीर को निश्चल बनाये हुए शङ्कर को देखा…

इत्थं प्रतिपादितस्यासनजयादिरूपस्य योगस्य सिद्धिं दर्शयति—

**कपालनेत्रान्तरलब्धमार्गैर्ज्योतिःप्ररोहैरुदितैः शिरस्तः ।**
**मृणालसूत्राऽधिकसौकुमार्यां बालस्य लक्ष्मीं ग्लपयन्तमिन्दोः ॥**

शुचि जोतिं शिर के नेत्र पथ से निकलती थी या अनिल ।
मृदु कमल सूत्र अधिक नरम बालेन्दु श्री होती धुमिल ॥

**अन्वयः**—कपालनेत्रान्तरलब्धमार्गैः शिरस्तः उदितैः ज्योतिःप्ररोहैः… लसूत्राऽधिकसौकुमार्यां बालस्य इन्दोः लक्ष्मीं ग्लपयन्तं तं ददर्शेति पूर्वे…

**व्याख्या**—कपालनेत्रान्तरलब्धमार्गैः=कर्परनयनविवरप्राप्तपथैः, … रोटिनेत्रविवरप्राप्तमार्गैरित्यर्थः । शिरस्तः=मूर्ध्नः, ब्रह्मरन्ध्रादित्यर्थः । उ… उत्थितैः ज्योतिःप्ररोहैः=तेजोऽङ्कुरैः, मृणालसूत्राधिकसौकुमार्यां=… विशेषसुकुमारतां, बालस्य इन्दोः=शिरश्चन्द्रस्य, अर्द्धचन्द्रस्येत्यर्थः । … कान्तिं, ग्लपयन्तं=मलिनीकुर्वन्तं, तं शिवं ददर्शेति पूर्वश्लोकेनान्वयः ।

**व्युत्पत्तिः**—कपालनेत्रान्तरलब्धमार्गैः=कपालस्य नेत्रं कपालनेत्रं, "स्या-रः कपालोऽस्त्री" इत्यमरः । कपालनेत्रस्य अन्तरं कपालनेत्रान्तरम्, "अन्त-काशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनावहिरवसरमध्येऽन्तरा-ने च॥" इत्यमरः । लब्धः मार्गः यैस्ते लब्धमार्गाः, "अयनं वर्त्म मार्गाऽध्व-ानः पदवी सृतिः" इत्यमरः । कपालनेत्रान्तरेण लब्धमार्गाः कपालनेत्रान्त-ब्धमार्गाः, तैः कपालनेत्रान्तरलब्धमार्गैः । शिरस्तः = शिरस इति शिरस्तः, स्यास्तसिल् । "उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः । तिःप्ररोहैः=ज्योतिषां प्ररोहाः, ज्योतिःप्ररोहाः, तैः ज्योतिःप्ररोहैः । मृणा-सूत्राऽधिकसौकुमार्यां=मृणालस्य सूत्रं मृणालसूत्रं, 'मृणालं बिसम्" इति, त्राणि नरि तन्तवः" इति चाऽमरः । मृणालसूत्रात् अधिकं मृणालसूत्राऽधि-। सुकुमारस्य भावः सौकुमार्यं, ष्यञ्प्रत्ययः। मृणालसूत्राधिकं सौकुमार्यं यस्याः मृणालसूत्राऽधिकसौकुमार्या, तां मृणालसूत्राधिकसौकुमार्याम् । इन्दोः="हि-ऽशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः" इत्यमरः ।

अयभिप्रायः-योगिनो हि नियमितप्राणा आग्नेयमण्डलापरनामधेयं कुण्डलि-शब्दाभिधेयमात्मतेजो मूलाधारादुत्थाप्य क्रमात् सुषुम्नान्तरं नाभिप्रदेशं हृदयं मध्यं च नीत्वा द्वादशान्तस्थिते परमात्मनि योजयन्ति । परमेश्वरस्य तु तदानीं न तेजसा तन्मध्यवर्तिनो बालचन्द्रस्य प्रभासङ्कोचोऽपि सञ्जातः । बालचन्द्रे पर-त्मसाम्यं च प्रतीयते ।

**भावार्थः**—ब्रह्मशिरःकपालनेत्ररन्ध्रनिर्गतैः ब्रह्मरन्ध्रादुद्भूतैस्तेजोऽङ्कुरैः बिस-न्तुविशेषमार्दवां जटाकोटितटघटितबालचन्द्ररश्मीं तिरस्कुर्वन्तं हरं ददर्श । बलसन्निधौ दुर्बलं ग्लानिमेतीति हि लोकप्रसिद्धमिति भावः ।

**भाषा**—नेत्र और ब्रह्मरन्ध्र से निकलने वाले तीक्ष्ण तेज से बिसतन्तु के दृश कोमल जटाजूट के अग्रभाग में स्थित चन्द्रकला के सूक्ष्म रश्मि का तिर-स्कार करने वाले शङ्कर को देखा ।

अथ योगसिद्धेः फलमाह—

**मनो नवद्वारनिषिद्धवृत्ति, हृदि व्यवस्थाप्य समाधिवश्यम् ।**
**यमक्षरं क्षेत्रविदो विदुस्तमात्मानमात्मन्यवलोकयन्तम् ॥ ५० ॥**

नव द्वार रुद्ध समाधिवश्य सुमन हृदय में रख सदा ।
अक्षर जिसे बुध जानते निज में स्व को लखते सदा ॥

**अन्वयः**—नवद्वारनिषिद्धवृत्ति समाधिवश्यं मनः हृदि व्यवस्थाप्य यम् अक्षरं विदुः । तम् आत्मानम् आत्मनि अवलोकयन्तं तं ददर्शेति पू०

**व्याख्या**—नवद्वारनिषिद्धवृत्ति = नवद्वारनिवर्तितसंचारं समा० प्रणिधानवशंगतं, मनः = मानसं, हृदि=हृदये, व्यवस्थाप्य = निवेश्य, क्षेत्रज्ञाः पुरुषाः, यम् , अक्षरम्=अविनाशिनं, विदुः = विदन्ति । तं = आत्मानं=पुरुषम् , आत्मनि = स्वस्मिन् , अवलोकयन्तं=साक्षात्कुर्वन्त० म्भूतं शिवं ददर्शेति पूर्वेणान्वयः ।

**व्युत्पत्तिः**-नवद्वारनिषिद्धवृत्ति = नवभ्यः द्वारेभ्यः निषिद्धा नवद्वा० "तद्धितार्थोत्तरपदसमाहारे च" इति समासः । नवद्वारनिषिद्धा वृत्ति० नवद्वारनिषिद्धवृत्ति, तत् । शरीरस्य नव द्वाराणि सन्ति, यथाहुः—

"नयनश्रवणे द्वे द्वे नासिके वदनं तथा ।
पायूपस्थौ च देहेऽस्मिन्नव द्वाराणि देहिनाम् ॥" इति ।

समाधिवश्यं=वशं गतं वश्यम्, यत्प्रत्ययः । समाधिना वश्यं, सम० तत्, समाधिपरिशीलनमेव हि विषयेभ्यो मनोनिवारणस्योपायः । "प्रणि० धानं समाधिश्च समाश्रयः" इति हलायुधः । हृदि = "हृदयं हृत्" इ० मनोनिवासस्थानं हि हृदयमित्याह भगवान् वसिष्ठः । तथा हि—

"यतो निर्याति विषयान्यस्मिंश्चैव प्रलीयते ।
हृदयं तद्विजानीयान्मनसः स्थितिकारणम् ॥" इति ।

क्षेत्रविदः=क्षेत्रं=शरीरं, विदन्तीति क्षेत्रविदः, गीतायां भगवान् श्रीकृ०

"इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥" इति ।

"क्षेत्रज्ञ आत्मा पुरुषः" इत्यमरः । अक्षरम्=न क्षरतीति अक्षरः, त० कूटस्थमिति यावत् । तथा च गीतायां भगवान् श्रीकृष्णोऽप्याह—

"द्वाविमौ पुरुषौ लोके क्षरश्चाऽक्षरमेव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥" इति ।

विदुः = "विदज्ञाने" इति धातोः लट् । "विदो लटो वा" इति अवलोकयन्तम्=अवलोकयतीति अवलोकयन्, तम् अवलोकयन्तं । श०

**भावार्थः**—नयनश्रवणादिनवेन्द्रियेभ्यो निवृत्तसञ्चारं समाधिपरिशीलने० भूतमन्तःकरणं मनोनिवासस्थानभूते हृदयाख्याधिष्ठाने निरुध्य "योगिनः

नं विदन्ति" तं परमात्मानं स्वस्मिन् जीवात्मनि पश्यन्तं हरं ददर्शेति भावः।

**भाषा**-नयन, श्रवण इत्यादि नव इन्द्रियों के सञ्चारको रोककर समाधि के शीलनसे वशीभूत अन्तः करण को मन का निवासस्थानभूत हृदय नामक धिष्ठान में स्थिर करके "योगी लोग जिसको अविनाशी कहते है" उस पर-त्मा का अपनेही जीवात्मामें साक्षात्कार करने वाले शङ्करको देखा।

अथ तथाभूतं शिवमवलोक्य कामस्यावस्थामाह—

**स्मरस्तथाभूतमयुग्मनेत्रं पश्यन्नदूरान्मनसाऽप्यधृष्यम्।**
**नाऽलक्षयत्साध्वससन्नहस्तः, स्रस्तं शरं चापमपि स्वहस्तात् ५१**

देखा मनोभव ने निकट से शम्भु तो डर गया।
उसको पता न तनिक चला धनुबाण कर से गिर गया॥

**अन्वयः**—स्मरः तथाभूतं मनसा अपि अधृष्यम् अयुग्मनेत्रम् अदूरात् पश्यन् साध्वससन्नहस्तः सन् स्वहस्तात् स्रस्तं शरं चापम् अपि न अलक्षयत्॥

**व्याख्या**—स्मरः = कामदेवः, तथाभूतं = पूर्वोक्तरूपं, मनसा अपि = चित्तेन अपि, अधृष्यम् = अनभिभवनीयम् अयुग्मनेत्रम् = त्र्यम्बकम्, अदूरात् = समीपस्थात् प्रदेशात्, पश्यन् = अवलोकयन्, साध्वससन्नहस्तः—भयविश्लथपाणिः, सन् स्वहस्तात् = आत्मपाणेः, स्रस्तं=गलितं, शरं = बाणं, चापम् अपि=धनुश्च, अपिशब्दः समुच्चये। न अलक्षयत=न विवेद।

**व्युत्पत्तिः**—स्मरः="कामः पञ्चशरः स्मरः" इत्यमरः। तथाभूतं=तथा भूतः तथाभूतः, तं तथाभूतं, "सुप्सुपा" इति समासः। अधृष्यम् = धर्षितुं शक्यः धृष्यः, न धृष्यः अधृष्यः, तम अधृष्यम्। अयुग्मनेत्रं = न युग्मानि अयुग्मानि, "युग्मं युगलं युगम्" इत्यमरः। अयुग्मानि नेत्राणि यस्य सः अयुग्मनेत्रः, तम् अयुग्मनेत्रम्। अदूरात्=न दूरः अदूरः, तस्मात्, अदूरात, "स्याद् दूरं विप्रकृष्टम्"—इत्यमरः पश्यन् = पश्यतीति पश्यन्, "दृशिर् प्रेक्षणे" इति धातोः शतृप्रत्ययः। साध्वस सन्नहस्तः=सन्नौ हस्तौ यस्य स सन्नहस्तः, साध्वसेन सन्नहस्तः साध्वससन्नहस्तः, "भीतिर्भीः साध्वसं भयम्" इत्यमरः। स्वहस्तात्=स्वस्य= आत्मनः हस्तः = करः स्वहस्तः, तस्मात् स्वहस्तात्। स्रस्तं="स्रंसु अवस्रंसने" इति धातोः क्तप्रत्ययः। अलक्षयत = "लक्षदर्शनाऽङ्कनयोः" इति धातोर्लङ्॥

**भावार्थः**-कामः पूर्वोक्तरूपं सङ्कल्पेनाप्यनभिभवनीयं त्र्यम्बकं समीपेऽवलोकयन् भयकम्पितहस्तः सन् स्वकीयकरात् गलितंबाणं बाणासनमपि न विवेदेतिभावः।

भाषा—पूर्वोक्तस्वरूपवाले और मन से भी जिसका अभिभव हो है, ऐसे शङ्कर को समीप में देखकर भयसे कांपने वाला कामदेव, अ धनुष्य और बाण दोनों कब गिर गये यह भी नहीं जान सका।

अथ प्रथमसर्गे प्रतिपादितं पार्वतीकर्तृकं शुश्रूषादिलक्षणं प्रयोज्योपाव ऽवतारयति—

**निर्वाणभूयिष्ठमथाऽस्य वीर्यं संधुक्षयन्तीव वपुर्गुणेन।**
**अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या ॥ ५१**

बल नष्ट प्रायः होगया था लौट जीवन आगया।
देखा सखी के साथ गिरिजा को सकल सुख पागया ॥

अन्वयः—अथ निर्वाणभूयिष्ठम् अस्य वीर्यं वपुर्गुणेन संधुक्षयन्ती ता वनदेवताभ्याम् अनुप्रयाता स्थावरराजकन्या अदृश्यत।

५१ व्याख्या——अथ = कामदेवशरचापपतनाऽनन्तरम्, निर्वाण प्रायम्, अस्य = कामदेवस्य, वीर्यं = बलम्, वपुर्गुणेन = शरीरसौन्द क्षयन्ती इव = वर्द्धयन्ती इव स्थिता, वनदेवताभ्याम् = अरण्यदेवताभ् भूताभ्यां विजयामालिनीभ्यामिति शेषः"। अनुप्रयाता=अनुगता, स् कन्या=पर्वतराजकुमारी, पार्वतीत्यर्थः। अदृश्यत=दृष्टाभूत्, कामेनेति

व्युत्पत्तिः—निर्वाणभूयिष्ठं=भूयिष्ठेन निर्वाणं निर्वाणभूयिष्ठं, तत् ताग्न्यादिषु पाठात् पूर्वनिपातनियमाभावः। कर्तरि निष्ठान्तश्चायं नि "निर्वाणोऽवाते" इति सूत्रेण निपातितः। वपुर्गुणेन = वपुषः गुणः तेन वपुर्गुणेन, "गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः" इत्यमरः। वनदे वनस्य देवते वनदेवते, ताभ्यां वनदेवताभ्यां। "वृन्दारका दैवतानि देवताः स्त्रियाम्" इत्यमरः। स्थावरराजकन्या = स्थावराणां राजा स्था "राजाऽहःसखिभ्यष्टच्" इति समासान्तष्टच्। स्थावरराजस्य कन्या स् कन्या, "कन्या कुमारी" इत्यमरः। अदृश्यत = "दृशिर् प्रेक्षणे" इ कर्मणि लङ्, "सार्वधातुके यक्, कामदेवेनेत्यर्थः।

भावार्थः—साध्वसप्राप्त्यनन्तरं नष्टप्रायं कामस्य बलं स्वशरीर योतिशयेन गुणेन वर्धयन्तीव स्थिता सखीभूताभ्यां विजयामालिनीभ् पार्वती नेत्रगोचरा बभूवेति भावः।

भाषा—मारे डरके नष्टप्राय होनेवाले कामदेव के बल को अपने

त्तर सौन्दर्य गुणसे बढ़ती हुई पार्वती को, विजया और मालिनी नामक सखियों के साथ कामदेव ने देखा ।

चतुर्भिः श्लोकैः कलापकेन पार्वतीं वर्णयति । तत्रादौ तस्या वसन्त-भरणरमणीयत्वमाह—

**अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युतिकर्णिकारम् ।**
**मुक्ताकलापीकृतसिन्धुवारं वसन्तपुष्पाभरणं वहन्ती ॥ ५३ ॥**

सुन्दर अशोक सुमन सहित नव कर्णिकार कुसुम मयी ।
देखा मदन ने पार्वती को सिन्धुवार कुसुम मयी ॥

**अन्वयः**—अशोकनिर्भर्त्सितपद्मरागम् आकृष्टहेमद्युतिकर्णिकारं मुक्ताकलापी-सिन्धुवारं वसन्तपुष्पाभरणं वहन्ती स्थावरराजकन्या अदृश्यतेति पूर्वेणान्वयः ।

**व्याख्या**—अशोकनिर्भर्त्सितपद्मरागम् = वञ्जुलतिरस्कृतशोणरत्नम्, आकृ-द्युतिकर्णिकारम्=आहृतसुवर्णाभरणवर्णपरिव्याधं, मुक्ताकलापीकृतसिन्धुवारं= कककलापीकृतनिर्गुण्डीकुसुमं, वसन्तपुष्पाभरणं–सुरभिकुसुमभूषणं, वहन्ती = ना, पार्वती अदृश्यतेत्यर्थः ।

**व्युत्पत्तिः**—अशोकनिर्भर्त्सितपद्मरागम्=अशोकस्य पुष्पम् अशोकम्, वयवे च प्राण्योषधिवृक्षेभ्यः" इत्युत्पन्नतद्धितस्य "पुष्पमूलेषु बहुलम्" इति । निर्भर्त्सिताः पद्मरागाः येन तत् निर्भर्त्सितपद्मरागं, "शोणरत्नं लोहितकः रागः" इत्यमरः । अशोकेन निर्भर्त्सितपद्मरागम् अशोकनिर्भर्त्सितपद्मरागम्, । आकृष्टहेमद्युतिकर्णिकारं=हेम्नः द्युतिः हेमद्युतिः, "स्युः प्रभारुग्रुचिस्त्वि-भाश्छविद्युतिदीप्तयः" इत्यमरः । आकृष्टा हेमद्युतिर्यैस्तानि आकृष्टहेमद्युतीनि । कारस्य पुष्पाणि कर्णिकाराणि । आकृष्टहेमद्युतीनि कर्णिकाराणि यस्मिन् तत् ष्टहेमद्युतिकर्णिकारं, तत् । मुक्ताकलापीकृतसिन्धुवारं=मुक्तानां कलापाःमुक्ता-पाः, अमुक्ताः किलापाः मुक्ताकलापाः यथा सम्पद्यन्ते तथा कृतानि मुक्ताकला-तानि । सिन्धुवारस्य पुष्पाणि सिन्धुवाराणि । "सिन्धुवारेन्द्रसुरसौ निर्गुण्डीन्द्रा-केत्यपि" इत्यमरः । मुक्ताकलापीकृतानि सिन्धुवाराणि यस्मिन् तत् मुक्ताकलापी-सिन्धुवारं, तत् । वसन्तपुष्पाभरणं=वसन्तस्य पुष्पाणि वसन्तपुष्पाणि, "व-पुष्पसमयः सुरभिः" इत्यमरः । वसन्तपुष्पाणि एव आभरणं वसन्तपुष्पाऽऽ-णं, तत्, जातावेकवचनं । वहन्ति=वहतीति वहन्ती । शतृप्रत्ययः, नुमागमश्च ।

**भावार्थः**—अशोककुसुमनिन्दितपद्मरागमणीनि कर्णिकारकुसुमनिन्दितसु-

वर्णकान्तीनि मौक्तिकहारताप्रापितसिन्दुवारकुसुमानि वसन्तपुष्पमयान्याभर
दधाना पार्वती अदृश्यतेति भावः।

भाषा—पद्मरागमणि के समान लाल अशोकके, सुवर्ण के समान
कर्णिकार के, और मोति के समान सफेद सिन्दुवार के वसन्त ऋतु में
होने वाले फूलों से वने आभरण को धारण करने वाली पार्वती को देखा।

अथ तस्याः स्तनजघनाद्यवयवविभागान् वर्णयति—

**आवर्जिता किञ्चिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम्।**
**पर्याप्तपुष्पस्तबकावनम्रा, सञ्चारिणी पल्लविनी लतेव ॥ ५४**

स्तन भार से नत बाल रवि सम वस्त्र निर्मल धार कर।
दल सुमन नत कम्पित लता की तरह गिरजा थी सुघर ॥

**अन्वयः**—स्तनाभ्यां किंचित् आवर्जिता इव तरुणार्करागं वासः
अत एव, पर्याप्तपुष्पस्तवकाऽवनम्रा पल्लविनी सञ्चारिणी लता इव उत्प्रे
णा पार्वती अदृश्यतेति पूर्वेणान्वयः।

**व्याख्या**—स्तनाभ्यां=कुचाभ्यां, किञ्चित=ईषत्, आवर्जिता इव=
मिता इव, स्तनभारगौरवादवनमितशरीरेत्यर्थः। तरुणाऽर्करागं=नवसूर्यरा
लाऽर्काऽरुणमित्यर्थः, वासः=वसनं, वसाना=आच्छादयन्ती, धारयन्ती
अत एव, पर्याप्तपुष्पस्तबकाऽवनम्रा=प्रचुरकुसुमगुच्छकाऽवनता, पल्लवि
किसलयवती, सपल्लवेत्यर्थः। सञ्चारिणी=जङ्गमा, लता इव=व्रतति
उत्प्रेक्ष्यमाणा पार्वती अदृश्यतेति शेषः।

**व्युत्पत्तिः**—तरुणाऽर्करागं=तरुणश्चाऽसौ अर्कः तरुणार्कः, "विकर्त
मार्तण्डमिहिराऽरुणपूषणः" इत्यमरः। तरुणाऽर्कस्य राग इव रागो यस्य त
णार्करागं, तत्। उपमानपूर्वपदो बहुव्रीहिः, उत्तरपदलोपश्च। वासः="
च्छादनं वासश्चेलं वसनमंशुकम्" इत्यमरः। वसाना="वस आच्छादने
धातोः शानच्प्रत्ययः। अत एव पर्याप्तपुष्पस्तबकाऽवनम्रा=पर्याप्तानि
पुष्पाणि पर्याप्तपुष्पाणि, तेषां स्तबकाः पर्याप्तपुष्पस्तबकाः, "स्याद्गुच्छ
बकः" इत्यमरः। पर्याप्तपुष्पस्तबकैः "हेतुना" अवनम्रा पर्याप्तपुष्पस्तबका
पल्लविनी=पल्लवाः सन्ति यस्याः सा पल्लविनि। सञ्चारिणी=सञ्चार
यस्याः सा सञ्चारिणी। अत्रोत्प्रेक्षालङ्कारः। तत्र च गौरीलतयोः, स्तनस्त
रक्तवासःपल्लवयोश्च परस्परसाम्यमुत्प्रेक्षाबीजम्।

भावार्थः—स्तनभारगौरवादवनमितशरीरा अचिरोदितसूर्यरागारुणमम्बरं परिदधाना पार्वती, परिपूर्णकुसुमगुच्छकैरवनमिता सञ्जातपल्लवा सञ्चरणशीला लतेव स्थिताऽदृश्यतेति भावः ।

भाषा—स्तन के बोझ से शरीर को कुछ झुकाये हुई, प्रातःकाल के सूर्य प्रभा के समान लाल धोती पहिने हुई, पार्वतीको, फूलोंसे भरे हुवे गुच्छोंसे भार से लटकने वाली, नये पल्लवों को धारण करने वाली गमन शील (चलने फिरने वाली ) लता के समान स्थित ऐसी देखा ।

अथ श्लोकद्वयेन तस्या व्यापारविशेषं वर्णयति—

**स्रस्तां नितम्बादवलम्बमाना, पुनः पुनः केसरदामकाञ्चीम् ।**
**न्यासीकृतां स्थानविदा स्मरेण, मौर्वीं द्वितीयामिव कार्मुकस्य ५५**

**स्थानज्ञ स्मर से न्यस्त धनु की दूसरी ज्या की तरह ।**
**गिरती पुनः रखती जगह पर वकुल कांची कलित गह ॥**

अन्वयः—स्थानविदा स्मरेण न्यासीकृतां कार्मुकस्य द्वितीयां मौर्वीम् इव उत्प्रेक्ष्यमाणां नितम्बात् स्रस्तां केसरदामकाञ्चीं पुनः पुनः अवलम्बमाना "पार्वती अदृश्यते"ति पूर्वेणान्वयः ।

व्याख्या—स्थानविदा = स्थानवेदिना, निक्षेपयोग्यस्थानवेदिनेत्यर्थः । स्मरेण = कामदेवेन, न्यासीकृतां = निक्षेपीकृतां कार्मुकस्य = धनुषः, द्वितीयां = द्वयोः पूरणीं, मौर्वीम् इव = ज्याम् इव, उत्प्रेक्ष्यमाणां, नितम्बात् = कटिपश्चाद्भागात् , स्रस्तां=चलितां, केसरदामकाञ्चीं = वकुलमालामेखलां, पुनःपुनः=वारं वारम् , अवलम्बमाना=आलम्बमाना, हस्तेन धारयन्तीत्यर्थः । एवम्भूता पार्वती, अदृश्यतेति पूर्वेणान्वयः ।

व्युत्पत्तिः—स्थानविदा=स्थानं वेत्तीति स्थानवित् , तेन स्थानविदा, न्यासीकृताम् = अन्यासः न्यासः यथा सम्पद्यते तथा कृता न्यासीकृता, तां न्यासीकृतां, च्विप्रत्ययः । कार्मुकस्य = कर्मणे प्रभवतीति कार्मुकं, तस्य कार्मुकस्य "कर्मण उकञ्" इति उकञ्प्रत्ययः । "अथाऽस्त्रियौ । धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् । इष्वासोऽपि" इत्यमरः । द्वितीयां=द्वयोः पूरणी द्वितीया, तां द्वितीयां । मौर्वीम्="मौर्वी ज्या शिञ्जिनी गुणः" इत्यमरः । नितम्बात्—"पश्चान्नितम्बः स्त्रीकट्याः" इत्यमरः । केसरदामकाञ्चीं=केसराणां दाम केसरदाम्, सा एव काञ्ची केसरदामकाञ्ची तां केसरदामकाञ्चीं, "स्त्रीकट्यां मेखला काञ्ची सप्तकी रश-

ना तथा" इत्यमरः । अवलम्बमाना=अवलम्बते इति अवलम्बलाना, अवो
पूर्वकात् "लबि अवस्रंसने" इति धातोः शानच्प्रत्ययः । "आने मुक्" इति
गमः । अत्राप्युत्प्रेक्षालङ्कारः ।

**भावार्थः**—निक्षेपस्थानज्ञेन मदनेन निक्षेपीकृतां चापस्यातिरिक्तां प्र
मिव स्थितां, जघनप्रदेशात् गमनवशात् गलितां केसरमालामयीं रशनां
प्रतिबन्धनिरासाय स्वयमेव स्वस्थानं नीत्वा करेण धारयन्ती पार्वती, अदृ
पूर्वेणान्वय इति भावः ।

**भाषा**—निक्षेप के योग्य स्थान को जानने वाले कामदेव ने रखी हुई
की दूसरी डोरी के समान, और चलने से जघनस्थान से नीचे की तरफ कुछ
हुई, केसर की माला से बनी अपनी रशना को (करधनी को) गमन मे
न होय इस लिये स्वयं ऊपर खसका कर हाथ से पकड़े हुई पार्वती को

पुनस्तामेव वर्णयति—

**सुगन्धिनिश्वासविवृद्धतृष्णं बिम्बाऽधरासन्नचरं द्विरेफम्।**
**प्रतिक्षणं सम्भ्रमलोलदृष्टिर्लीलाऽरविन्देन निवारयन्ती ॥ ५६।**

निश्वास-सुरभि-तृषित भ्रमर फिरते अधर के थे निकट ।
चञ्चल दृगी लीला कमल द्वारा हटाती सभय हट ॥

**अन्वयः**—सुगन्धिनिश्वासविवृद्धतृष्णं बिम्बाऽधराऽऽसन्नचरं द्विरेफं प्र
सम्भ्रमलोलदृष्टिः सती लीलाऽरविन्देन निवारयन्ती पार्वती अदृश्यतेति पूर्वे

**व्याख्या**—सुगन्धिनिश्वासविवृद्धतृष्णाम्=इष्टगन्धमुखमारुतोदीर्णतृष्णं
म्बाधरासन्नचरं = बिम्बतुल्योष्ठसंनिकृष्टचरं, द्विरेफं = भृङ्गं, प्रतिक्षणं = प्रति
सम्भ्रमलोलदृष्टिः = साध्वसचपलनेत्रा, सती, लीलारविन्देन = लीला
निवारयन्ती = निषेधयन्ती, पार्वती, अदृश्यतेत्यर्थः ।

**व्युत्पत्तिः**—सुगन्धिनिश्वासविवृद्धतृष्णां = शोभनः गन्धः येषां ते सुग
"सुरभिर्घ्राणतर्पणः । इष्टगन्धः सुगन्धिः स्यात्" इत्यमरः । "गन्धस्येदुत्पूति
भिभ्यः" इति समासान्तेत्वम् । सुगन्धयश्च ते निश्वासाः सुगन्धिनिश्वा
विशेषेण वृद्धा विवृद्धा, सा तृष्णा यस्य सः विवृद्धतृष्णः । सुगन्धिनिश्वासै
द्धतृष्णः सुगन्धिनिश्वासविवृद्धतृष्णः, तं सुगन्धिनिश्वासविवृद्धतृष्णं । बिम्
राऽऽसन्नचरं = बिम्बम् इव अधरः बिम्बाऽधरः, "उपमानानि सामान्य

इति समासः। "ओष्ठाऽधरौ तु रदनच्छदौ दशनवाससी" इत्यमरः । आसन्नं चरतीति आसन्नचरः' "समीपे निकटाऽऽसन्नसंनिकृष्टसनीडवत् । उपकण्ठान्तिकाऽभ्यर्णाऽभ्यग्रा अप्यभितोऽव्ययम् ॥" इत्यमरः । बिम्बाऽधरस्य आसन्नचरः इति बिम्बाऽधराऽऽसन्नचरः, तं बिम्बाधरासन्नचरं, द्विरेफं = द्वौ रेफौ यस्य स द्विरेफः,भ्रमर इत्यर्थः । तं द्विरेफं, प्रतिक्षणं=क्षणं क्षणं प्रतिक्षणं । वीप्सायामव्ययीभावः । सम्भ्रमलोलदृष्टिः=लोले दृष्टी यस्याः सा लोलदृष्टिः, "चलनं कम्पनं कम्पं चलं लोलं चलाचलम्" इति "दृग्दृष्टी" इत्यप्यमरः । सम्भ्रमेण लोलदृष्टिः सम्भ्रमलोलदृष्टिः । लीलाऽरविन्देन=लीलाया अरविन्दं लीलारविन्दं, तेन लीलारविन्देन "वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्" इत्यमरः । निवारयन्ती=निवारयतीति निवारयन्ती, शतृप्रत्ययः ।

अत्र किल कलापके महाकविः प्रतीभामय्या स्वदृष्ट्या लोकोत्तरसौन्दर्यसौकुमार्यादिभिः स्वत एव रमणीयं तत्कालोचितभूषाविलासादिभिश्च नितरां हृदयङ्गमं पार्वतीशरीरं साक्षात्कृत्य स्ववचनशक्त्या सहृदयानामपि साक्षात्कारपदवीं नीतवानिति भाविकमलङ्कारः । तल्लक्षणं यथा साहित्यदर्पणे—

"अद्भुतस्य पदार्थस्य भूतस्याऽथ भविष्यतः ।
यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ॥" इति ।

भावार्थः—आमोदिमुखपवनैधिततृष्णं बिम्बौष्ठसन्निकृष्टगतं भ्रमरं प्रतिक्षणं सम्भ्रमेण चञ्चलाक्षी सती दूरीकुर्वाणा पार्वती दृष्टेति भावः ।

भाषा—सुगन्धित निश्वासकी तृष्णा से ओठों के पास आने वाले भ्रमरों को घबराहट से ( भयसे ) आंख को चञ्चल बनाकर दूर करने वाली पार्वती को देखा ।

अथ तादृशपार्वतीदर्शनलब्धबलस्य कामस्यावस्थामाह—

**तां वीक्ष्य सर्वाऽवयवाऽनवद्यां रतेरपि ह्रीपदमादधानाम् ।
जितेन्द्रिये शूलिनि पुष्पचापः, स्वकार्यसिद्धिं पुनराशशंसे ॥५७॥**

रति से अधिक अनवद्य अवयव देख कर सुन्दर सुघर ।
आशा हुई स्मर को जितेन्द्रिय में विजय की फिर प्रवर ॥

अन्वयः—सर्वाऽवयवाऽनवद्यां रतेः अपि ह्रीपदम् आदधानां तां वीक्ष्य पुष्पचापः जितेन्द्रिये शूलिनि स्वकार्यसिद्धिं पुनः आशशंसे ॥

व्याख्या—सर्वाऽवयवाऽनवद्यां=सकलाऽवयवाऽगर्ह्यां, रतेः अपि=काम-

पत्न्या अपि, ह्रीपदं=लज्जानिमित्तम् , आदधानां=धारयन्तीं, तां=पूर्वोक्तां,
तीमित्यर्थः, वीक्ष्य=दृष्ट्वा, पुष्पचापः=कुसुमधन्वा, कामदेव इत्यर्थः। जितेन्द्रि
वशीकृतकरणे, शूलिनि=शूलधारिणि, हरे इत्यर्थः। वैषयिकी सप्तमीयम्।
कार्यसिद्धिम् = आत्मकर्मसाफल्यं, पुनः=भूयः, आशशंसे=चकमे ।

पूर्वं "साध्वससन्नहस्तः" ३।५१ इत्यादिना कार्यसिद्धेः उन्मूलितत्वाद
नादिह पुनरित्युक्तम् ।

व्युत्पत्तिः—सर्वाऽवयवाऽनवद्यां = सर्वे च ते अवयवाः सर्वाऽवयवाः
उद्यते इति अवद्या । "अवद्यपण्यवर्या गर्ह्यपणितव्याऽनिरोधेषु" इति निपात
"कुपूयकुत्सिताऽवद्यखेटगर्ह्याऽणकाः समाः" इत्यमरः। न अवद्या अनव
सर्वाऽवयवेषु अनवद्या, तां, सर्वावयवानवद्यां, ह्रीपदं = ह्रियः पदं ह्रीपदं,
"मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा" इति, "पदं व्यवसितत्राणस्थानलक्ष्माङ्
वस्तुषु" इत्यप्यमरः। आदधानाम् = आदधातीति आदधाना, ताम् आदधा
शानच्प्रत्ययः। पुष्पचापः=पुष्पं चापं यस्य स पुष्पचापः, "शम्बराऽरिर्म
कुसुमेषुरनन्यजः" इत्यमरः। जितेन्द्रिये=जितानि इन्द्रियाणि येन स जितेन्द्रि
तस्मिन् जितेन्द्रिये, उपरतेन्द्रियव्यापारेऽपीत्यर्थः। शूलिनि=शूलम् अस्याऽ
शूली, तस्मिन् शूलिनि, "शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः" इत्य
स्वकार्यसिद्धिं = स्वस्य कार्यं स्वकार्यं, तस्य सिद्धिः स्वकार्यसिद्धिः, तां स्व
सिद्धिम् , आशशंसे = "आङः आसु इच्छायाम्" इति धातोर्लिट् ॥

भावार्थः—सर्वाङ्गसुन्दरीं स्वावलोकनेन रतीमपि लज्जयन्तीं तां
सम्यगवलोक्य कुसुमधन्वा व्युपरतेन्द्रियव्यापारेऽपि हरविषये स्वात्मनो हरव
शीकरणव्यापारस्य फलसिद्धिं पुनरपि श्रद्दधे इति भावः।

भाषा—सकल अवयवों से सुन्दर, और अपने सौन्दर्य से रतिको भी
करने वाली उस पार्वती को अच्छी तरह देखकर कामदेव को जितेन्द्रिय
के विषय में भी चित्तको हरण करने के अपने व्यापार की सफलता का
विश्वास हुआ ।

अथ प्रकृतकथामेवानुसन्धत्ते—

भविष्यतः पत्युरुमा च शम्भोः, समाससाद प्रतिहारभूमिम्।
योगात्स चान्तः परमात्मसंज्ञं, दृष्ट्वा परं ज्योतिरुपारराम ॥

गिरिराज कन्या शम्भु की प्रतिहार भू पर आ गई ।

